# सीतारावणसंवादझरी.

इतीयं वर्णचित्रकृतिः

श्रीमत्कर्णाटवलयकमलकर्णिकायमानायां महीशूरराजधान्यामुत्तुङ्गं
सिंहासनमधितिष्ठतश्श्रीकृष्णराजेन्द्रस्यास्थानपण्डितेष्वेकतमेन
संस्कृतपाठशालायां च महाराजपदपूर्वकमभिख्यायमाना-
यामौपाध्यायकमवलम्बमानेन श्रीसीतारमण
चरणारविन्दमिलिन्दायमानमानसेन

**चामराजनगर रामशास्त्रिणा**

आख्याता व्याख्याता च

विजयतेतराम्.

---

१९०६.

# भूमिका.

अयं खलु ग्रन्थोऽस्यां महीशूरराजधान्यां जीवत्येव कविजनकल्पतरौ पुरातने श्रीमति कृष्णराजमहीपाले, गते सति पञ्चषष्ट्यधिकाष्टशत्युत्तरे क्रिस्तशकाब्दानां सहस्रे, समुपनतस्य प्रभवसंवत्सरस्य वैशाखशुक्लसप्तम्यां स्वयमेव महान्तमनुग्रहमवलम्ब्य धियमधिष्ठितवत्याश्शारदाम्बायाः प्रचोदनात् 'न साहसमनालम्ब्य नरो भद्राणि पश्यति' इत्यनुचिन्तितवता मया सहृदयहृदयाह्लादिनीमर्थपुष्टिमजहतः कस्यचिदतिदुर्घटस्य निगूढमर्थचमत्कारं बिभ्रतो वर्णचित्रकाव्यस्य निर्माणतः सर्वत्र भूतलेऽतिमहत्स्वसाहसं प्रदर्शयितुमभिलष्य, तथाविधपद्यरचनायां प्रारिप्सितायामुक्तिप्रत्युक्त्योरेव गूढार्थवर्णगर्भीकरणसौकर्यप्रतिभाने सति तादृगुक्तिप्रत्युक्त्योरन्विष्ट्योर्भगवता वाल्मीकिना श्रीमद्रामायणे प्रतिपादितस्य सर्वजनादरणीयस्य सीतारावणसंवादस्यैव तादृशतायां प्रतिभातायां तस्यैवात्र विषयतया समाश्रयणात्, प्रतिपाद्यार्थस्य स्फुटनिवेदनाय सीतारावणसंवादझरीत्येव नाम्ना ग्रन्थितुमारभ्यत.

तदा प्रभृति त्रिंशदब्दपर्यन्तमम्लानमेव महान्तमुत्साहमाश्रित्य प्रतिक्षणमतिमहताऽवधानेनान्वेषणतः कथंकथमपि सङ्गृहीतानि व्युत्पात्तविशेषोत्पादितार्थैस्सङ्केताक्षरैर्गर्भीकृतेन, पतिव्रतोक्तिभङ्गीमङ्गीकुर्वतैव सीतायाः प्रतिवचनेन, स्वस्तुतिपराणां निन्दापरत्वं, रामनिन्दापराणां च स्तुतिपरत्वं रावणोक्तीनां यथा स्यात्तथाऽर्थप्रतिपादकानि पदानि सङ्गमय्य, विद्वत्कविजनाभिनन्दनीयेन बुद्धिविलसितेनैकैकशो निष्पादितैः स्वाभिमतैः गूढार्थप्रत्युत्तरैः पञ्चाशत्पद्यैः सीताप्रतिवचनौचित्यभङ्गस्याप्यङ्गीकारेण परप्रत्यायनार्थमनिच्छयैव सङ्घटितैः प्राचीनपद्यविधैः नव-

भिस्स्फुटार्थप्रत्युत्तरपद्यैश्श्रीरामकथासङ्ग्रहार्थमुपरचितैः पूर्वोत्तर-पीठिकापद्यैश्च समग्रः षण्णवत्यधिकाष्टशत्युत्तरैकसहस्रतमे क्रिस्तशकाब्दे दुर्मुखिनाम्नाऽस्मदीयैर्व्यवह्रियमाणे निरवर्त्यत.

एवमतिचिरमतिमहता बुद्धिसाहसेन निर्वर्तितोपि ग्रन्थोऽय-मपूर्वकल्पनोपजनितनिगूढार्थत्वादव्याख्यश्चेदनुपयुक्त एव स्या-दिति पर्यालोच्य व्याख्यया च स्वयमेवोपरचितया संयोज्य विद्वत्कविभ्योऽन्यत्येभ्यस्सर्वेभ्योपि प्रादर्श्यत. ते च सहृदया-स्सर्वेऽप्यमत्सरेणैव कृतिमिमामभ्यनन्दन्निति तु पुस्तकेऽत्रैवाग्रतः पत्रेषु जाग्रतां तत्तन्मुखोद्गतानां प्रशस्तिपद्यानामाकलनादेव व्य-क्तीभविष्यति.

परं तु—

पूर्वमास्वादितादप्यास्वाद्यं रसामृतं संस्कृतशब्दौघदुग्धा-म्बुधावन्यदन्यदेव निगूढमवतिष्ठत इति भुवि विबुधास्सर्वेऽ-प्यनेनैव यथा जानीयुस्तथाऽस्य ग्रन्थस्य सर्वदेशप्रचारः कथं भवेदिति चिन्तार्णवनिमग्ने मयि श्रीमत्कर्णाटराज्यश्रीपर्यवस्थाप-नसाहसलब्धयशःपूर्णस्य पूर्णयमहामात्यस्य कुलजलधेः पारिजा-तश्श्रीमान् कृष्णमूर्तिमहामात्यः कृपया राजकीयेनैव मुद्रायन्त्रेण परिमुद्रणामादिश्य ग्रन्थस्यास्य सकलदेशप्रचारार्हतासंपादनेन मामन्वग्रहीदिति तस्य विद्वत्प्रभोरतिदीर्घमायुरारोग्यमुत्तरोत्तरा-भ्युदयं च निरन्तरमाशासानश्श्रीहरिमतिभक्त्याऽभ्यर्थये.

योऽप्यस्य ग्रन्थस्य तत्त्वतस्स्वरूपमवबुध्य तस्मै च महा-मात्याय सम्यगावेद्य तदीयमादेशमप्रतिकूलमेव परिमुद्रणाया-मासाद्य मुद्रणप्रक्रियां च साङ्गमनुपरोधमेव निर्वर्त्य मह्यमतिम-हतीमुपकृतिमकरोत् स च श्रीमहीशूरनगरराजकीयप्राच्यकोशा-गाराध्यक्षश्श्रीमान् महादेवशास्त्र्यतिचिरमायुष्मानारोग्यवानभ्युद-यवांश्च भूयादित्यनिशमाशासे.

चामराजनगर रामशास्त्री,
विज्ञापयिता.

It was with great pleasure that I heard read out to me a charming Sanskrit poem composed by the well-known poet, Pandit Chamarajanagar Rama Sastri. The poem is in the form of a dialogue between Ravana and Sita. Each verse has two meanings—one plain and the other hidden. The epithets which Ravana is made to use either in praise of himself or in disparagement of Rama are such as give a contrary meaning by the addition, removal or substitution of a letter. The change to be made is very ingeniously indicated in the last line of each verse containing Sita's reply which outwardly expresses in a natural manner her indignation. It is gratifying to note that though the poet writes under self-imposed restrictions his verses are smooth and elegant. The poem bears ample testimony not only to the poetical skill and ingenuity of the author but also to the singular flexibility of the Sanskrit Language. I trust that the work will be duly appreciated.

MYSORE,<br>*10th February 1899.*

R. NARASIMHACHAR,<br>*Government Translator,*<br>*Education Department.*

Pandit Châmarâjanagara Râma S'âstri is a well-known Sanskrit writer in Mysore and his compositions in prose and verse are marked with chasteness of style, lucidity of expression, and accuracy of thought. A poem on which he has worked long during the best portion of his life and bestowed much care and trouble is known by the name of Sitâ-Râvana-Samvâda-jhari and has been recently published in Mysore. The work bears the impress of the author's mastery of Sanskrit and skill in handling the language. The poem purports to be a dialogue between Râvana and Sitâ and consists of 108 verses. In the first three lines of every one of these verses—except the few introductory ones—Râvana extols his own bravery or speaks lightly of Râma, and then in the last line, Sitâ, in reply, chides him in righteous indignation. Sita's reply, covertly suggests the addition, omission, or substitution of a letter or word in Râvana's statement which converts his self-praise into a raillery against himself. Such a feat of style is possible only in a flexible language like Sanskrit, rich in vocabulary, and handled by a skilful writer like our author. Notwithstanding the restriction under which he has written, the style of the poem is flowing and embodies no far-fetched ideas. I fervently wish that Sanskrit students and scholars will accord to the work that cordial and enthusiastic reception which it so richly deserves.

MYSORE,<br>*14th Nov. 1905.* — A. MAHADEVA SASTRI,<br>*Curator, Govt. Oriental Library.*

(1) श्रीमन्महीशूरपुराधीशश्रीकृष्णराजेन्द्रकुलगुरुभिः श्रीमत्परमहंसपरिव्राजकाचार्येत्याद्यकलङ्कबिरुदाङ्कितैः विद्वत्कविशिरोमणिश्रीकृष्णब्रह्मतन्त्रपरकालस्वामिभिः सानुग्रहमवधाय प्रत्यक्षरमवलोकनतस्संशोध्य परितोषतः कृतिमिमां प्रति स्वाभिमत्यभिद्योतनाय स्वहस्ताक्षरश्रेणिकया स्वास्थानाधिकारमुद्रिकया चाङ्कितं पत्रमाधिरोप्य प्रवितीर्णाश्श्लोकाः—

कृतास्तोकायासैरपि कुकविभिर्दुष्करतरं
चिरादेव प्राज्ञैरपि सुयतनैश्शक्यरचनम् ।
भवेदीदृक्काव्यं न तु मृदुलयत्नैस्तत इयं
कृतिश्श्लाघ्या सीतादशवदनसंवादलहरी ॥ १ ॥

अनन्यक्षुण्णार्थानुगुणपदसन्दर्भसुभगं
निजोपज्ञव्याख्याप्रकटितनिगूढार्थनिचयम् ।
बुधैश्श्राव्यं काव्यं तदिदमतिभव्यं प्रमदय-
त्यहो नश्श्रीचामाधिपनगररामाख्यसुकवेः ॥ २ ॥

एषा वामोक्तिरूपाऽपि प्राप्ता रामोक्तिरूपताम् ।
अग्रेवरतया भव्या जीयात्कृतिरियं भुवि ॥ ३ ॥

---

(2) श्रीमत्कृष्णराजेन्द्रास्थानधर्माधिकारिभिश्श्रीचक्रवर्त्य्यङ्गार्यवर्यैः कृतिमिमां प्रति स्वाभिप्रायमभिद्योतयितुमालिख्य वितीर्णौ श्लोकौ—

जानकीनिशिचरेन्द्रवादयुक्चामराणणगररामसूरिणा ।
निर्मितं विजयतेतरामिदं वर्णचित्रकृतिरत्नमद्भुतम् ॥ १ ॥

जनकदुहितृरक्षोऽधीशवादप्रबन्धः
समवगतगुणश्चेदेष सम्यग्विमर्शात् ।
कमपि हृदि विकासं धीमतां निर्मिमीते
प्रसभमथ च तेषां मस्तकं निर्धुनीते ॥ २ ॥

(3) श्रीमद्भिः पण्डितरत्न कस्तूरिरङ्गाचार्यैः कृतिमिमां प्रति स्वाभिप्रायद्योतनाय प्रविलिख्य वितीर्णाश्श्लोकाः—

सीतारावणवादझर्यनुगता माधुर्यमुख्यैर्गुणैः
प्रायस्सौधझरीनिरादरकरी श्रीरामगिर्यन्तरे ।
सम्भूता भुवि नव्यभव्यकवनस्वारस्यसाक्षात्क्रिया
स्वालस्यं जहतां सतां प्रतिपदं सूते मुदं कामपि ॥ १ ॥
रामोत्तमाननोद्यद्वामोक्तिविचित्रताकृष्टचै ।
रामोत्तमोक्तिरलमिति सामोदं वर्णने कियच्चित्रम् ॥ २ ॥
स्वोपज्ञटीकयाऽपि च मनोज्ञभावं परिस्फुटं दधतीम् ।
कृतिमेनां विमृशन्निति शंसति कस्तूरिरङ्गनाथसुधीः ॥ ३ ॥



(4) पण्डितरत्न श्रीमद्वेङ्कटूरु सीतारामशास्त्रिभिरसकृदिमां कृतिमभिनन्दितवद्भिरेनां प्रत्याभप्रायं स्वीयमाविष्कर्तुमादरतः प्रविलिख्यार्पिताश्श्लोकाः—

वचःप्रतिवचोऽन्वयप्रकलितार्थविश्रान्तिधीः
अनन्यमतिगोचरीभवदतिस्फुटार्थान्तरा ।
विदेहतनयादशाननविवादमय्यद्भुता
कृतिर्जयति चामराणगररामधीमत्कृता ॥ १ ॥
सीतादशाननविवादमयीमुदारां
द्वावेव तौ कृतिमिमां भुवि नाद्रियेते ।
योऽस्यास्स्वरूपमवगन्तुमनर्ह एव
योऽर्होऽपि सन् प्रबलमत्सरदूषितात्मा ॥ २ ॥
अघटितघटनव्युत्पत्त्यनुसृतरसवत्कवित्वरुचिभाजाम् ।
इदमेकमेव विदुषामासेचनकं न किं नु कृतिरत्नम् ॥ ३ ॥
पण्डितरत्नपदाङ्कितसीतारामाभिधेन विदुषेदम् ।
लिखितं पद्यत्रितयं सीतापौलस्त्यवादकृतिविषये ॥ ४ ॥



(5) श्रीमन्महीशूरपुर्यां सद्विद्याशालाध्यक्षतयाऽतीव प्रतीतिमवलम्बितवद्भिः पेरीस्वामितिरुमलाचार्यैरतिचिरादतितरामभिनन्दनात्मना प्रोत्साहनेन ग्रन्थकर्तुर्ग्रन्थेऽस्मिन् व्यासक्तिमुत्तेजितवद्भिः कृतिमिमां प्रति स्वाभिप्रायाभिव्यक्त्यै विलिख्यार्पिता वाक्यावळ्यनुष्टुब्द्वयी च—

अथेदानीमनेन वयं सम्भावयामः तत्रभवतः कविमार्गविदः सहृदयान्महाशयान् इयंकिल चित्रकृतिः श्रीचामराजनगररामशास्त्रिवर्यविरचिता सीतारावणसंवादझरी पुरैव मया प्राथमिकेषु कतिपयश्लोकेषु समास्वादितचरी चिराय चमत्करोकरीति स्म मदीयं मानसमखिलपद्यरसास्वादनलोलुपम् । इदानीं नवाधिकेषु पञ्चाशत्यपि पद्येष्वनितरसाधारणाः निरतिशयनैपुणीनिबन्धनाः सरसललितपदबन्धनाः वर्णविनिमयवैखरीविमर्शविवशीकृतरसिकजनहृदयाः सीतारावणयोरुक्तिप्रत्युक्तिरीतयः सावधानमास्वादिताः कलुषिताशयस्य मत्सरिणो दशशिरसोऽपि शिरश्चलयन्ति किमुतेतरस्य सहृदयस्य इति किं बहुना—

सीतारावणसंवादझरी मधुझरी यथा ।
नामोदयति कं वाऽत्र भुवि निर्मत्सरं नरम् ॥ १ ॥

चामराजपुरीरामकविवर्यमुखोदिताम् ।
सीतारावणसंवादझरीमाशास्महे वयम् ॥ २ ॥

ग्रन्थेऽस्मिन्नुपयोजितानामक्षरचित्राणां लक्षणानि जिज्ञासुभिः श्लोकसङ्ख्याक्रमेण सप्तदशस्य सीतारावणसंवादे प्राथमिकस्य 'परिक्षीणालक्ष्यः' इति श्लोकस्य व्याख्यायामन्त्यभागे द्रष्टव्यानि.

ॐ

शुभमस्तु.

अ वि घ्न म स्तु.

श्रीलक्ष्मीनरसिंहाय परस्मै गुरवे नमः.



# सीतारावणसंवादझरी.



क्रीडारुष्टाद्रिजाङ्घ्रिप्रणतशिवशिरश्चन्द्रखण्डे क-
राग्रं लीलालोलं प्रसार्य स्फुरदमलबिसाशङ्कयाऽऽ-
क्रष्टुकामः । उद्यद्भूयास्मिताभ्यामहमहमिकयाऽऽ-
लिङ्ग्यमानश्शिवाभ्यां कश्चिन्नश्चिन्तितार्थं कलयतु
कलभो बाललीलाऽभिरामः ॥ १ ॥

व्याख्या



यदीक्षणाभ्यामभिवीक्ष्यमाणं
स्वभाणकान्ताकरकेळिपद्मम् ।
निमीलनोन्मीलनयौगपद्य-
विद्यामधीते पुरुषस्स वोऽव्यात् ॥ १ ॥

सीतारावणसंवादझरीं वाग्देवतैव या ।
मन्मुखस्थाऽवदत्प्रेम्णा सैव व्याख्याति तां स्वयम् ॥२॥

स्फुटार्थोक्त्यन्वितात्यन्तस्फुटप्रत्युक्तिमय्यपि ।
गूढार्थभेदकोदारगूढोत्तरकरम्बिता ॥ ३ ॥
रामरावणयोर्निन्दास्तुत्योर्व्यत्ययतोऽद्भुता ।
सीतारावणसंवादझरी विजयतेतराम् ॥ ४ ॥
औचितीमर्थतस्तत्र शब्दतश्चातुरीमपि ।
आस्वादयितुमेवैष यत्नो व्याख्योद्यमात्मकः ॥५॥

इह खलु प्रारिप्सितं प्रबन्धमविघ्नतः परिपूरयितुमखिलविघ्ननिवारणचणस्य भगवतो बालगजाननस्यानुसन्धानौपयिकं आशीरूपं मङ्गलं प्रबन्धमुखलक्षणेषु प्रथमोपात्तमादौ निबध्यते—क्रीडेति ॥ क्रीडया रुष्टायाः क्रीडामेव फलतयोद्दिश्य रोषमात्मन्यारोपितवत्या इत्यर्थः । 'अध्ययनेन वसति' इत्यत्रेव फलस्यापि हेतुत्वात् 'हेतौ' इति सूत्रेण तृतीया 'तृतीया' इति योगविभागात् 'सुप्सुपा' इति वा समासः । अद्रिजायाः पार्वत्याः अङ्घ्र्योः प्रणतस्य शिवस्य शिरश्चन्द्रखण्डे मौळीन्दुकलायां लीलालोलं करस्य शुण्डायाः अग्रं प्रसार्य स्फुरत्, अमलं च यद्बिसं तदाशङ्कया लसदच्छमृणाळमिदं स्यात्, इति वितर्केण—'शङ्का वितर्कभययोः' इति वैजयन्ती । आक्रष्टुं कामो यस्य स तथोक्त इति शिवयोः स्मितहेतूक्तिः । 'तुं काममनसोरपि' इति तुमनो मकारस्य लोपः । उद्यत् हृद्यं स्मितं ययोः तथोक्ताभ्यां, शिवा च शिवश्च शिवौ 'पुमांस्त्रिया' इत्येकशेषः ताभ्यां गौरीशङ्कराभ्यां अहमहमिकया अहमहमिति परस्परंप्रत्यहङ्कारेण अहमिति शब्दपरमव्ययम् ।

तस्य वीप्सायां द्वित्वम् । मयूरव्यंसकादित्वात्समासः, अहमहमिति शब्दोऽस्त्यस्यां क्रियायामित्यहमहमिका, व्रीह्यादित्वात् मत्वर्थीयः ठन्प्रत्ययः, 'ठस्येकः' इतीकादेशः 'अनित्यत्वादव्ययानाम्' इति टिलोपो न : । 'अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः' इत्यमरः । आलिङ्ग्यमानः । आङ्पूर्वाल्लिङ्गतेः कर्मणि लटश्शानजादेशः । बाललीलाभिः प्रागुक्तचन्द्रकलाकर्षणसदृशीभिर्बह्वीभिरिति भावः । अभिरामः मनोहरः स्पृहणीय इति यावत् । कश्चित् स्वरूपतः प्रकारतश्च निर्वक्तुमशक्य इत्यर्थः । कलभो गजशावकः— 'कलभः करिशावकः' इत्यमरः । गौरीशङ्करकर्तृकातिप्रेमपूर्वकालिङ्गनविषयतौचित्याद्बालो गणपतिरित्यर्थः । युज्यते च—'सर्वस्य गात्रस्य शिरः प्रधानम्' इति न्यायेन मुखस्यैव प्राधान्याभिमत्या गजमुखत्वाद्बालस्य गणपतेरेवात्र कलभ इति व्यपदेशः । नः अस्माकं चिन्तितार्थमिष्टार्थं कलयतु ददातु । आशिषि लोट् । कवीनां कलिः कामधेनुः । अत्रादौ हर्षमूलकव्यापारविशेषवाचकतया भद्रादिशब्दान्तःपातिनः क्रीडाशब्दस्य प्रयोगात् वर्णगणादिशुद्धेरम्युच्चयः । तदुक्तं—

देवतावाचकाश्शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्यास्स्युर्लिपितो गणतोऽपि वा ॥

इति ॥ विघ्नराजत्वादिरूपया प्रसिद्धयैव भङ्ग्या गम्यस्यापि भगवतो गणपतेः कलभ इति भङ्ग्यन्तराश्रयणेनोक्तत्वादत्र पर्यायोक्तं नामालङ्कारः; तदुक्तं—

पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ॥

इति ॥ स च बिसाशङ्कयेति भ्रान्तिमदलङ्कारेण उद्यद्धद्यस्मिताभ्यामिति, कश्चिन्नश्चिन्तितार्थमिति व्यञ्जनद्वयावृत्तिलक्षणाभ्यां शब्दालङ्काराभ्यां च वृत्त्यनुप्रासनामभ्यां संसृज्यते । व्यङ्ग्यदशश्चात्रैवं परितोष्यन्ते—तथाहि—क्रीडारुष्टेत्यनेन गौर्याश्शिवे स्ववाञ्छभ्यजिज्ञासा द्योत्यते । अङ्घ्रयोः प्रणत इत्यनेन शिवकृतानां सान्त्ववचनादीनामनुनयनोपायान्तराणामकिञ्चित्करत्वं गौर्याः कृतककोपस्य गाढत्वं शम्भोः कथमपि गौरीप्रसादनौत्सुक्यं च द्योत्यते । बिसाशङ्कयाऽऽकृष्टकाम इत्यनेन चेष्टाहारादिष्वपि गजस्वभावानुवृत्तिर्गजमुखस्यास्तीति द्योत्यते । उद्यद्धद्यस्मिताभ्यामित्यनेन गौर्याः प्रणयकोपस्य शम्भोस्स्वापराधसम्भावनातङ्कस्य च सद्योऽपगमः प्रहर्षोन्मेषश्च द्योत्यते । तयोर्मनसि कोपातङ्कयोरपगममन्तरा प्रहर्षोन्मेषस्यानवकाशात् । प्रहर्षोन्मेषमन्तरा स्मितस्यानुदयात् । कृतकस्य तु स्मितस्य हृद्यत्वासम्भवादिति । अहमहमिकयेत्यनेनातिव्यामोहकत्वं बालगणपतेरतिवत्सलत्वं च शिवयोस्तस्मिन् द्योत्यते । शिवाभ्यामालिङ्ग्यमान इत्यनेन तयोर्गणपतेश्चानन्दसान्द्रत्वं द्योत्यते । कश्चिदित्यनेन अलौकिकत्वं कलभस्य द्योत्यते । कलभशब्दप्रयोगहेतुचिन्तयोन्नीयमानेन बालत्वेन भक्तजनैरभ्यर्थितानां महतामपीप्सितार्थानां वितरणे गणपतेर्निर्विमर्शत्वं द्योत्यते । बाला एव हि खलु जगति संस्तुतैर्जनैरभ्यर्थितमनर्घमप्याभरणादिकमविमृशन्त एव वितरन्ति । एवमन्यान्यपि व्यङ्ग्यानि यथासम्भवं कुशलजनैराकल-

ायानि । स्रग्धरावृत्तमेतत् —

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥

ति लक्षणात् ॥ १ ॥

## अर्थपुष्ट्यविनाभूतशब्दचित्रातिदुर्घटा ।
## सीतारावणसंवादझरीति ग्रथ्यते कृतिः ॥ २ ॥

अथ चिकीर्षितो ग्रन्थस्सविशेषतया विषयेण नाम्ना च ार्दिश्य प्रतिज्ञायते—**अर्थेति** ॥ अर्थस्याभिधेयस्य पुष्ट्या परिषेण सहृदयहृदयविस्तारावगाहिना परिबृंहणेनेति यावत् । अविनाः अरहितैः शब्दैः वाचकैः चित्रा आलेख्यवत् रूपविशेषलिनीत्यर्थः । रूपविशेषस्य च वाङ्मयगतस्य वर्णविन्यासससाधारात् श्लेषभित्तिकमभेदाध्यवसायमनुमन्यमानैरालङ्कारिकैः प्रवर्तित ापचारिकश्चित्रत्वव्यवहारः । यद्वा—आश्चर्यकरीत्यर्थः—‘ आलोश्चर्ययोश्चित्रम् ’ इत्यमरः । अत एव अतिदुर्घटा अतितरां यितुमशक्या चित्रदेहे चेतनाया इव चित्रकाव्ये अर्थपुष्टेरघानत्वादिति भावः । घटयतेः ‘ ईषद्दुस्सुषु ’ इत्यादिना खल्प्रत्ययः। ारावणसंवादझरीति । इतिशब्दोऽत्र ‘ नाम ’ इत्यव्ययस्थानिसंज्ञास्वरूपनिर्देशपरः । जानकीदशग्रीवोक्तिप्रत्युक्तिपरम्परारूपविषरूपयैव संज्ञया प्रथिष्यमाणेत्यर्थः । कृतिः ग्रन्थः । संज्ञायां पवादः क्तिन्प्रत्ययः । ग्रथ्यते निबध्यते । ग्रन्थतेः कर्मणि लट् । मनिदिताम् ’ इति नलोपः । आनुष्टुभं वृत्तम् ॥ २ ॥

**पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ॥**

इति ॥ स च बिसाशङ्कयेति भ्रान्तिमदलङ्कारेण उद्यद्धृद्यस्मिताभ्यामिति, कश्चित्कश्चिन्तितार्थमिति व्यञ्जनद्वयावृत्तिलक्षणाभ्यां शब्दालङ्काराभ्यां च वृत्त्यनुप्रासनामभ्यां संसृज्यते । व्यङ्ग्यदशश्चात्रैवं परितोष्यन्ते—तथाहि—क्रीडारुष्टेत्यनेन गौर्याश्शिवे स्ववाञ्छम्यजिज्ञासा द्योत्यते । अङ्घ्योः प्रणत इत्यनेन शिवकृतानां सान्त्ववचनादीनामनुनयनोपायान्तराणामकिञ्चित्करत्वं गौर्याः कृतककोपस्य गाढत्वं शम्भोः कथमपि गौरीप्रसादनौत्सुक्यं च द्योत्यते । बिसाशङ्कयाऽऽकृष्टुकाम इत्यनेन चेष्टाहारादिष्वपि गजस्वभावानुवृत्तिर्गजमुखस्यास्तीति द्योत्यते । उद्यद्धृद्यस्मिताभ्यामित्यनेन गौर्याः प्रणयकोपस्य शम्भोस्स्वापराधसम्भावनातङ्कस्य च सद्योऽपगमः प्रहर्षोन्मेषश्च द्योत्यते । तयोर्मनसि कोपातङ्कयोरपगममन्तरा प्रहर्षोन्मेषस्यानवकाशात् । प्रहर्षोन्मेषमन्तरा स्मितस्यानुदयात् । कृतकस्य तु स्मितस्य हृद्यत्वासम्भवादिति । अहमहमिकयेत्यनेनातिव्यामोहकत्वं बालगणपतेरतिवत्सलत्वं च शिवयोस्तस्मिन् द्योत्यते । शिवाभ्यामालिङ्ग्यमान इत्यनेन तयोर्गणपतेश्चानन्दसान्द्रत्वं द्योत्यते । कश्चिदित्यनेन अलौकिकत्वं कलभस्य द्योत्यते । कलभशब्दप्रयोगहेतुचिन्तयोन्नीयमानेन बालत्वेन भक्तजनैरभ्यर्थितानां महतामपीप्सितार्थानां वितरणे गणपतेर्निर्विमर्शत्वं द्योत्यते । बाला एव हि खलु जगति संस्तुतैर्जनैरभ्यर्थितमनर्घमप्याभरणादिकमविमृशन्त एव वितरन्ति । एवमन्यान्यपि व्यङ्ग्यानि यथासम्भवं कुशलजनैराकल-

नीयानि । स्रग्धरावृत्तमेतत्—

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥

इति लक्षणात् ॥ १ ॥

## अर्थपुष्ट्यविनाभूतशब्दचित्रातिदुर्घटा ।
## सीतारावणसंवादझरीति ग्रथ्यते कृतिः ॥ २ ॥

अथ चिकीर्षितो ग्रन्थस्सविशेषतया विषयेण नाम्ना च निर्दिश्य प्रतिज्ञायते—अर्थेति ॥ अर्थस्याभिधेयस्य पुष्ट्या परिपोषेण सहृदयहृदयविस्तारावगाहिना परिबृंहणेनेति यावत् । अविनाभूतैः अरहितैः शब्दैः वाचकैः चित्रा आलेख्यवत् रूपविशेषशालिनीत्यर्थः । रूपविशेषस्य च वाङ्मयगतस्य वर्णविन्याससाधारण्यात् श्लेषभित्तिकमभेदाध्यवसायमनुमन्यमानैरालङ्कारिकैः प्रवर्तित औपचारिकश्चित्रत्वव्यवहारः । यद्वा—आश्चर्यकरीत्यर्थः—'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । अत एव अतिदुर्घटा अतितरां घटयितुमशक्या चित्रदेहे चेतनाया इव चित्रकाव्ये अर्थपुष्टेरघटमानत्वादिति भावः । घटयतेः 'ईषद्दुस्सुषु' इत्यादिना खल्प्रत्ययः। सीतारावणसंवादझरीति । इतिशब्दोऽत्र 'नाम' इत्यव्ययस्थानिकस्संज्ञास्वरूपनिर्देशपरः । जानकीदशग्रीवोक्तिप्रत्युक्तिपरम्परारूपविषयानुरूपयैव संज्ञया ग्रथिष्यमाणेत्यर्थः । कृतिः ग्रन्थः । संज्ञायां समपवादः क्तिन्प्रत्ययः । ग्रथ्यते निबध्यते । ग्रन्थतेः कर्मणि लट् । 'अनिदिताम्' इति नलोपः । आनुष्टुभं वृत्तम् ॥ २ ॥

**पुरा रामे श्रीमत्यवनिपनिदेशेन वसुधा-**
**सुतासौमित्रिभ्यां सह विपिनगर्भे निवसति।**
**दुरात्मा लङ्केशो जनकतनयां छद्मविधिना**
**गृहीत्वा लङ्काया विपदमिव मूर्तां गृहमगात्॥**

अथ प्रतिज्ञाते ग्रन्थे विषयतया निर्दिष्टस्य सीतारावणसंवादस्य सन्दर्भानयनाय सङ्क्षेपतः श्रीरामकथा प्रस्तूयते । पुरेत्यादिभिः कतिपयैश्श्लोकैः—**पुरेति** ॥ पुरा पूर्वकाले त्रेतायुग इत्यर्थः । श्रीमति रामे अवनिपस्य दशरथस्य निदेशेन वसुधासुतासौमित्रिभ्यां सीतालक्ष्मणाभ्यां सह । 'समुद्राभ्राद्घः' इति निर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वज्ञापनात् विसंज्ञकस्य परनिपातः । विपिनगर्भे दण्डकारण्याभ्यन्तरे निवसति सति दुरात्मा दुश्शीलः लङ्केशो रावणः छद्मनः रामलक्ष्मणसन्निधानविघटकस्य कनकमयमायामृगप्रेषणरूपस्य कपटस्य विधिना विधानेन जनकतनयां लङ्कायाः स्वनगर्याः मूर्तां शरीरवतीम् । मूर्तिशब्दात् 'अर्शआदिभ्योऽच्' इति मत्वर्थीयोऽच्प्रत्ययः । विपदमिवेत्युत्प्रेक्षा । सीताऽपहारस्यैव लङ्कादाहरक्षोवधादीनां मूलत्वादिति भावः । गृहीत्वाऽपहृत्य गृहमगात् । इणो लुङ् । 'इणो गा लुङि' इति गादेशः ॥ ३ ॥

**निवेश्योद्याने स्वालयपरिसरस्थे रहसि तां**
**तदीयं सौन्दर्यं निरतिशयमालोक्य च मुहुः ।**

**न कामी स्वस्मिंस्तां कथमपि सरागां रघुपतौ**
**वेरागां च श्रीमत्यपि कलयितुं यत्नमकरोत् ॥४॥**

निवेश्येति ॥ निन्दितः कामोऽस्यास्तीति कामी निन्दायां अत इनिठनौ ' इतीनिप्रत्ययः—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

युक्तेः—सः रावणः तां सीतां स्वालयस्य परिसरस्थे पर्यन्तभूव-नि उद्याने अशोकवन इत्यर्थः । तत्रापि रहसि विविक्तदेशे विश्य मुहुः तस्यास्सीताया इदं तदीयम् 'त्यदादीनि च' ते वृद्धसंज्ञायां 'वृद्धाच्छः' इतिदमर्थे छप्रत्ययः । अतिशेत इत्य-शयम् । पचादित्वात्कर्तर्यच्प्रत्ययः । निर्गतमतिशयं यस्मात् नेरतिशयं सर्वोत्कृष्टमित्यर्थः । निरत्र निषेधार्थकः—'नि-श्चयनिषेधयोः' इत्यमरः । सौन्दर्यं आलोक्य च तां स्वस्मिन् थमपि महता प्रयत्नेनेत्यर्थः—

ज्ञातहेतुविवक्षायामप्यादि कथमव्ययम् ॥
कथमादि तथाऽप्यन्तं यत्नगौरवबाढयोः ॥

युक्तेः । सरागामनुरागवतीम् । श्रीमत्यपि सकलकल्याणगुणसंप-म्पन्नेऽपि रघुपतौ रामे विरागां निरनुरागां च कलयितुं यत्न-प्रममकरोत् । कृञो लङ् । अत्र कथमपीत्यनेन सामान्यतो राव-न कृतानां सर्वेषामनुरागसम्पादनोपायानामकिञ्चित्करत्वम् । तेन

सीतायास्तस्मिन्नतीव विमुखत्वम् । तेन च तस्याः परमं पातिव्रत्यं व्यज्यते । श्लोकद्वयमपि शिखरिणीवृत्तम्—'रसै रुद्रैश्छिन्ना यमनसभलागश्शिखरिणी' इति लक्षणात् ॥ ४ ॥

**एतस्मिन्नन्तरे निर्जनकजमुटजं वीक्ष्य संशोचता तामन्वेष्टुं सानुजेनाध्यटवि विचरताऽवाप्तपम्पातटेन । रामेण प्रापितस्य श्रियमिनतनयस्याज्ञयोत्तीर्णवार्धिर्लङ्कां गत्वाऽऽञ्जनेयो जनकदुहितुरावासवृक्षाग्रगोऽभूत् ॥ ५ ॥**

एतस्मिन्निति ॥ एतस्मिन्नन्तरे अस्मिन्नवसरे—

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥

इत्यमरः। निर्गता जनकजा यस्मात् तं तथोक्तं सीताविरहितमित्यर्थः। उटजं पर्णशालां वीक्ष्य संशोचता निर्लज्जं उच्चैश्शोकं कुर्वतेत्यर्थः । तां सीतामन्वेष्टुं सानुजेन लक्ष्मणसहितेनेत्यर्थः । अध्यटवि अटव्यां विभक्त्यर्थेऽव्ययीभावः । विचरता अवाप्तं पम्पायाः पम्पासरोवरस्य तटं येन तथोक्तेन रामेण । श्रियं राज्यलक्ष्मीमित्यर्थः । प्रापितस्य वालिनं निगृह्य तद्राज्येऽभिषेचितस्येत्यर्थः। इनतनयस्य सूर्यपुत्रस्य सुग्रीवस्येत्यर्थः । आज्ञया उत्तीर्णः वार्धिस्समुद्रो येन तथोक्तः आञ्जनेयः लङ्कां रावणपुरीं गत्वा प्राप्य

जनकदुहितुस्सीतायाः आवासवृक्षस्य शिंशुपातरोः अग्रं गच्छतीति तथोक्तः अभूत् । स्रग्धरावृत्तम् । लक्षणं तूक्तम् ॥ ९ ॥

**तदानीं निर्निद्रो रजनिचरमांशे दशमुखः**
**स्मरार्तस्सीतायास्सविधमुपयातो मम वशे ।**
**इयं स्यादेवं चेदिति शुभगुणानात्मनि मृषा**
**मृषा दोषानाह स्म च मुहुरनेकान्रघुपतौ ॥६॥**

तदानीमिति ॥ तदानीं रजनिचरमांशे रात्र्यन्त्यभागे निर्निद्रः त्यक्तनिद्र इत्यर्थः । स्मरार्तः कामपीडितः दशमुखः रावणः सीतायाः सविधं समीपं उपयातस्सन् एवं चेत् वक्ष्यमाणमुपायं कुर्यां यदीत्यर्थः इयं सीता मम वशे अधीनत्वे स्यात् भवेत् । **वशः प्रभुस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः । इति विश्वः** । इति बुद्ध्वेति शेषः । आत्मनि स्वस्मिन् मृषा अनृतान् आरोपितानिति यावत् । अनेकान् शुभगुणान् रघुपतौ च अनेकान् मृषा दोषान् मुहुः आह स्म अब्रवीत् । ब्रुवो लटि 'ब्रुवः पञ्चानाम्' इत्यादिना तिपो णल् ब्रुवश्चाहादेशः, 'लट्स्मे' इति भूते लट् । शिखरिणीवृत्तम् ॥ ६ ॥

**साध्व्याष्षिद्रमभि क्रुधा प्रतिवचो यादृक् क्षमं तादृशीं प्रत्युक्तिं विशदार्थिकां जनकजाऽऽख्यान्ती तदभ्यन्तरे । अर्थेनातिनिगूहितेन सकलां**

## तस्योक्तिमर्थान्तरं निन्ये यस्य स वेदिता यदि पुनर्ह्रीणो न किञ्चिद्वदेत् ॥ ७ ॥

**साध्व्या इति** ॥ साध्व्याः पतिव्रतायाः षिद्रमभि वि पुरुषं प्रति क्रुधा कोपेन यादृक् यादृशं प्रतिवचः उत्तरं क्ष उचितं तादृशीं तथाविधां विशदः अक्लेशेन स्फुटं प्रतीयमान अर्थो यस्यास्तथोक्ताम् । शैषिकः कप्, 'प्रत्ययस्थात्' इत्य दिना कात्पूर्वस्याकारस्येकारादेशः । प्रत्युक्ति 'किमरे चे बधानासक्तत्' इत्यादिरूपं प्रतिवचनं आख्यान्ती वदन्ती । अ ङ्पूर्वकात् ख्यातेश्शतरि ङीप्, 'आच्छीनद्योर्नुम्' इति नुमागमः जनकजा सीता तदभ्यन्तरे तादृशप्रतिवचनगर्भे अतिनिगूहिते अतितरां गोपितेन अर्थेन 'चकारस्थाने लकारं योजय' इत्य दिरूपेण सकलां सर्वामपि तस्य रावणस्य उक्तिं वाचम् ' पश्यातिविचक्षणोऽस्मि' इत्यादिरूपां अर्थान्तरं 'मां पश्यातिवि लक्षणोऽस्मि' इत्यादिरूपमन्यमर्थं निन्ये प्रापयामास । यः स्वश्लाघामपि स्वनिन्दात्मना परिणमयतोऽर्थस्य वेदिता यदि ज्ञा चेत् सः रावणः ह्रीणः लज्जितस्सन् पुनः भूयोपि किञ्चि ईषद्वचनमपि न वदेत् न ब्रूयात् किन्तु मुखमवनमय्य तूष्णी मेव परावर्तेतेत्यर्थः । तादृशमर्थान्तरं निन्य इति पूर्वेण सम्बन्ध शार्दूलविक्रीडितं वृत्तम्—

सूर्याश्वैर्मसजास्ततास्सगुरवश्शार्दूलविक्रीडितम् ॥

इति लक्षणात् ॥ ७ ॥

तदज्ञानात्तस्मिन्नविरतविवक्षे सति पुनः-
पुनः पौलस्त्ये सा जनकतनयाऽतीव कुपिता ।
स्फुटोऽस्य स्वोक्त्यैव स्वयमभिभवोऽस्त्वित्यति-
परिस्फुटीकृत्यैवार्थं कतिचन जगाद प्रतिगिरः॥

तदज्ञानादिति ॥ तस्मिन् पौलस्त्ये रावणे तदज्ञानात् तस्य प्रत्युक्तिनिगूहितार्थेन स्वप्रशंसाभिप्रायप्रयुक्तानामपि स्वोक्तीनां स्वनिन्दापर्यवसायित्वप्रापणस्य अज्ञानात् अबोधात् हेतोः पुनःपुनः अविरता विराममप्राप्ता विवक्षा वक्तुमिच्छा यस्य तथोक्ते सति पुनःपुनर्वक्तुमेव प्रवृत्ते सतीत्यर्थः । सा जनकतनया अतीव कुपिता सती अस्य राक्षसस्य स्वोक्त्यैव स्वयमभिभवः स्वतिरस्कारः स्फुटोऽस्तु इति विचिन्त्येति शेषः । अर्थं रावणस्य स्वप्रशंसावचनानां तन्निन्दाप्रतिपादकत्वप्रापकमर्थमित्यर्थः । अतिपरिस्फुटीकृत्यैव त्रिषु चरणेषु सङ्ख्यानिर्दिष्टस्यैकैकस्य वर्णस्य परित्यागकथनेन अतितरां व्यक्तीकृत्यैव कतिचन काश्चित् प्रतिगिरः प्रत्युक्तीः 'त्रिष्वप्यङ्घ्रिषु तुर्यवर्णरहितं रे जल्प ते जल्पितम्' इत्येवंविधाः जगाद । शिखरिणीवृत्तम् ॥ ८ ॥

तयोस्तं संवादं तरुशिरसि लीत्वा निशयमन्
हनूमान् वैदेह्याः प्रतिवचनतोऽत्यन्तमुदितः।
प्रयाते पौलस्त्ये निजवचनभ[illegible]त्सरूपि तां
समाश्वास्य त्रस्तां द्रुततरमुपागाद्रघुपतिम्॥

**तयोरिति ॥** तयोः सीतारावणयोः तं संवादं तरुशिरसि शिंशुपावृक्षाग्रे लीत्वा निलीय निशमयन् शृण्वन् हनूमान् वैदेह्याः प्रतिवचनतः प्रतिवचनेन । सार्वविभक्तिकस्तसिः । अत्यन्तमुदितः अतीव सन्तुष्टस्सन् तस्य सकलव्याकरणपारीणतया निगूढस्यापि प्रतिवचनार्थस्य सद्य एव प्रतिभानादिति भावः । पौलस्त्ये निजवचनानां भङ्गात् स्वनिन्दापर्यवसायित्वरूपपराजयात् हेतोः सरुषि सकोपे प्रयाते सति कुपित्वा गते सतीत्यर्थः । त्रस्तां 'कुपितो रावणः किं कुर्याद्वा' इति भीतां तां सीतां समाश्वास्य देवि! मा भैषीः क्षिप्रमेव राम आगत्य रावणं हत्वा त्वामयोध्यां नेष्यतीत्यादिवचनैस्समाधाय द्रुततरमतिशीघ्रं यथातथा रघुपतिं उपागात् रामस्यान्तिकमागमदित्यर्थः । वृत्तं पूर्ववत् ॥ ९ ॥

**नत्वोत्थाय कृताञ्जलौ हनुमति त्वत्प्रेयसी देव देऽयैक्षि क्षेमवती दशास्यसदनोद्यानद्रुमाधोभुवि । इत्यावेदयति प्रिया मम कथंशीला स रक्षोऽधमः किंवृत्तः कथयेति तं रघुपतिः पप्रच्छ वातात्मजम् ॥ १० ॥**

**नत्वेति ॥** नत्वा नमस्कृत्य उत्थाय कृतः अञ्जलिः येन तथोक्ते हनुमति हे देव! रामचन्द्र! त्वत्प्रेयसी देवी सीता दशास्यस्य रावणस्य सदनोद्याने अशोकवने यो द्रुमः शिंशुपातरुः तस्य अधोभुवि मूलदेशे क्षेमवती सकुशला ऐक्षि अदर्शि।

ईक्षतेः कर्मणि लुङ् । इति आवेदयति विज्ञापयति सति मम प्रिया सीता कथं शीलं यस्यास्सा तथोक्ता रक्षोऽधमः राक्षसापशदः सः रावण इत्यर्थः । तन्नामकथनस्य जुगुप्सितत्वादेवं निर्देशः किं कीदृशं वृत्तं चरित्रं यस्य स तथोक्तः इति रघुपतिः तं वातात्मजं पप्रच्छ । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

**स च श्रीरामचन्द्रेण परिपृष्टोऽनिलात्मजः ।**
**व्यजिज्ञपत्किमुक्तेन बहुना रघुपुङ्गव ॥ ११ ॥**

स इति ॥ श्रीरामचन्द्रेण परिपृष्टः सोऽनिलात्मजश्च व्यजिज्ञपत् । विज्ञापनाप्रकार एव किमित्यादिः । हे! रघुपुङ्गव! बहुना उक्तेन किम्? सङ्क्षेपतः कथयामि शृण्विति शेषः ॥ ११ ॥

**यत्सौशील्यं जनकदुहितुर्यस्त्वयि प्रेमभूमा**
**यस्त्वच्छौर्यप्रणयगरिमा याऽप्यवज्ञा दशास्ये ।**
**या चाहन्ता निशिचरपतेस्तत्समस्तं व्यनक्ति**
**प्रत्यक्षं मे रघुवर तयोस्सम्प्रवृत्तो विवादः॥१२**

यदिति ॥ हे रघुवर! जनकदुहितुः सौशील्यं सुशीलत्वं यत् । अस्तीति शेषः एवमग्रेऽपि । अत्र यच्छब्दानां सर्वेषामस्तीत्यध्याहार्यपदेनान्वयो बोध्यः । त्वयि विषये प्रेमभूमा अनुरागातिशयः यः त्वच्छौर्ये विषये प्रणयस्य विस्रम्भस्य गरि-

मा अलविमा यः । 'प्रणया अमी । विस्रम्भयाच्ञाप्रेमाण इत्यमरः । दशास्ये रावणे विषये अवज्ञाऽपि तिरस्कृतिश्च निशिचरपतेः रावणस्य अहन्ता अहङ्कारश्च या तत्समस्तं : तायास्सौशील्यादिकं रावणस्याहङ्कारं च सर्वमपि मे प्रत्य यथातथा सम्प्रवृत्तः तयोः सीतारावणयोः विवादः संवादः । ठ नक्ति प्रकटयति सीतारावणसंवादश्रवणादेव सीतायाः सौशील्य दिकं रावणस्याहङ्कारश्च स्पष्टमेव त्वयाऽवगम्यत इत्यर्थः । म न्दाक्रान्तावृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौनतौतोगुरू चेत् इति लक्षणात् ॥ १२ ॥

दृप्तस्स्वस्मिन्सुगुणमनृतं यातुधानाधिनाथो
देव त्वय्यप्यनृतमगुणं यैरवादीद्वचोभिः ।
तान्येवार्थे तदवमतिदं त्वत्समुत्कर्षदं च
स्वप्रत्युक्त्याऽद्भुतघटनया प्रापिपत्प्रेयसी ते।

स विवादोऽवश्यं त्वया श्रोतव्य इति वक्तुकामश्चमत्कार कारिणस्तस्य प्रकारं विज्ञापयति—दृप्त इति ॥ हे देव ! दृप्त गर्वितः यातुधानाधिनाथः रावणः यैः वचोभिः स्वस्मिन् आत्म नि अनृतं असत्यं सुगुणं त्वय्यपि दोषदूरे निरतिशयकल्याणगुणशा- लिन्यपीत्यपेर्र्थः । अनृतं अगुणं दोषं अवादीत् तान्येव व- चांसि ते प्रेयसी सीता । अद्भुता आश्चर्यकरी घटना निगू-

ह्यर्थवर्णयोजना यस्यां तथोक्तया स्वप्रत्युक्त्या निजप्रतिवचनेन
ादवमतिदं तस्यैव तिरस्कारप्रयोजकम् । त्वत्समुत्कर्षदं दूषणीयत-
या रावणेनोद्दिष्टस्यापि तवोत्कर्षमेवावगमयन्तं च अर्थं अभिधेयं
ापिपत् अनीनयत् । प्राप्नोतेर्ण्यन्तात् कर्तरि लुङ् । वृत्तं पू-
र्ववत् ॥ १२ ॥

**प्रत्युक्त्यर्थविबोधशक्तिविरहान्निर्लज्जमात्मस्तव-**
**त्वन्निन्दाव्यवसायतस्स जडधीर्नैव व्यरंसीद्यदा।**
**स्पष्टार्थानि तदा तथा प्रतिवचांस्याह स्म देवी यथा**
**स्वोक्त्यैवावगतार्थया स कुमतिर्ह्रीणः परावर्तत॥**

**प्रत्युक्त्यर्थेति** ॥ जडधीः मन्दबुद्धिः सः रावणः प्रत्यु-
क्तीनां सीताप्रतिवचनानां अर्थस्य स्वोक्त्यन्यथार्थत्वप्रापकनिगूढार्थ-
स्य विबोधे ज्ञाने विषये शक्तिविरहात् बुद्धिपाटवराहित्यात्
निर्लज्जं निस्त्रपं यथातथा आत्मस्तवत्वन्निन्दाव्यवसायतः स्वश्लाघ-
त्वन्निन्दनरूपात् उद्यमात् । सार्वविभक्तिकस्तसिः । यदा नैव
व्यरंसीत् नैव विरतोऽभूत् । विपूर्वाद्रमतेः कर्तरि लुङ्, 'व्या-
ङ्परिभ्यो रमः' इति परस्मैपदम् । तदा देवी सीता तथा
स्पष्टः विशदीभूतः अर्थः रावणेनात्मानं स्तोतुमुक्तानामुक्तीनां त-
न्निन्दापर्यवसायित्वप्राप्तिबोधकार्थः येषु तानि प्रतिवचांसि आह
स्म । कुमतिः दुर्बुद्धिः सः रावणः अवगतार्थया सम्यग्विदितस्व-
निन्दारूपार्थया स्वोक्त्यैव हेतुना ह्रीणः लज्जितस्सन् यथा प-

रावर्तत सीताया आभिमुख्यमेव परिहृत्य न्यवर्ततेत्यर्थः । तः स्पष्टार्थानि प्रतिवचांस्याह स्म देवीति पूर्वेण सम्बन्धः । शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

**शतार्धश्लिष्टार्थप्रतिफणितियुक्पद्यविधया**
**स्फुटैकार्थप्रत्युक्त्युपहितनवश्लोकविधया ।**
**प्रवृत्तं तं वादं दृढमवधृतं मे हृदि हठा-**
**न्मुखादद्योद्यन्तं रघुकुलमणे शृण्ववहितः॥१५॥**

शतार्धेति ॥ हे रघुकुलमणे! शतार्धं पञ्चाशत्सङ्ख्यावन्ति श्लिष्टार्थाभिः उभयार्थाभिः प्रतिफणितिभिः प्रत्युक्तिभिः युज्यन्त इति तथोक्तानि यानि पद्यानि तान्येव विधा प्रकारः तया स्फुटं व्यक्तः एकः एक एव अर्थः यासां ताभिः प्रत्युक्तिभिः उपहिता सहिताः ये नवसंख्याकाश्श्लोकाः त एव विधा तया च प्रवृत्तं दृढं यथातथा मे हृदि चित्ते अवधृतं त्वयि विज्ञापयितुमेव सकुतुकं मया सम्यग्गृहीतानुपूर्वीकमित्यर्थः । अत एवाद्य त्वत्सन्निधौ हठाद्बलात्कारात् मुखात् उद्यन्तं निर्गच्छन्तं तं रावणोक्तिदेवीप्रत्युक्तिरूपं वादं अवहितः सावधानस्सन् शृणु । शिखरिणीवृत्तम् ॥ १५ ॥

**इत्युदीर्य पवमाननन्दनः**
**शब्दशास्त्रविदुषां पुरोगमः ।**
**आदरादवधृतं श्रुतं पुरा**
**तं विवादमवदद्यथाक्रमम् ॥ १६ ॥**

इतीति ॥ शब्दशास्त्रविदुषां व्याकरणशास्त्रपारीणानां प-
तानां पुरोगमः अग्रेसरः पवमाननन्दनः हनूमान् इत्युदीर्य
मुक्त्वा पुरा शिशुपाग्रावस्थानावसरे श्रुतं आदरात् अवधृतं
त्कृतिजनितया श्रीरामचन्द्रे विजिज्ञापयिषया सम्यग्गृहीतं तं
ादं सीतारावणयोस्संवादं यथाक्रमं वर्णानुपूर्वीक्रममनतिक्रम्य
ादत् । रथोद्धतावृत्तम्—'रान्नराविह रथोद्धता लगौ' इति
ाणात् ॥ १६ ॥

**परिक्षीणालस्यस्समरभुवि रक्षःकुलपतिः**
**लज्जस्स्वस्तुत्याममलहितमार्गैकपथिकः ।**
**प्रणम्रस्त्रीलभ्यस्सुमुखि विलसत्कीर्तिरिति च**
**तो नाहं किं रेऽधम मुहुरलं त्वां श्रुतवती ॥१७॥**

परिक्षीणालस्य इति ॥ रावणस्सीतामाह—परिक्षीणेत्या-
किमित्यन्तम् । अत्र विलसत्कीर्तिरित्यन्त्यविशेषणान्ते श्रूयमाण
शब्दस्समुच्चयार्थकचकारयोगमहिम्ना प्रतिविशेषणमभिसम्बध्यते ॥
खि ! सुवदने ! जानकि ! समरभुवि परिक्षीणं आलस्यं यस्य
क्त इति, रक्षसां कुलस्य पतिरिति, स्वस्तुत्यां सलज्ज इति,
ले हिते च मार्गे एकस्मिन् पथिक इति, निष्पापमुभयलोक-
ावहं च शास्त्रविहितं सदाचारमेकमेवाभिपन्न इतीत्यर्थः ।
लोऽस्त्री पापविट्किट्टानि' इत्यमरः । मार्गैकपथिक इति शिव-
ावतवत्समासः । प्रणम्राणां प्रणामशीलानां 'नमिकम्पि' इत्या-

दिना रप्रत्ययः । स्त्रीणां लभ्य इति । विलसन्ती कीर्तिः यस्य तथोक्तः इति च अहं न श्रुतः किम् । त्वयेति शेषः । अत्र समरभुवि परिक्षीणालस्य इत्यनेन स्वस्य महोत्साहत्वमरि-निर्भीकत्वं च, रक्षःकुलपतिरित्यनेन दुस्साधसाधनसमर्थत्वं दुर्धर्षत्वं च, स्वस्तुत्यां सलज्ज इत्यनेन धीरोदात्तत्वं, अमलहितमार्गैकपथिक इत्यनेन सुजनाग्रगण्यत्वं, प्रणमस्त्रीलभ्य इत्यनेन सुभगत्वं, विल-सत्कीर्तिरित्यनेन सकललोकश्लाघनीयत्वं च रावणेन द्योतितम् । कृता खल्वेवमेव सीतां प्रत्यात्मश्लाघा रावणेन श्रीमद्रामायणे—

> नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत् ।
> पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ॥
> असकृत्संयुगे भग्ना मया विमृदितध्वजाः ।
> अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः ॥

इत्यादिना ॥

सीता प्रत्युत्तरमाह—रेऽधमेत्यादि श्रुतवतीत्यन्तम् । रेऽधम ! मुहुरलम् पुनःपुनर्मा वादीरित्यर्थः । त्वां श्रुतवती अहमिति शेषः रे इति हीनसम्बोधने, अलमिति निवारणे । 'हीन-सम्बोधने तु रे', 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यु-भयत्राप्यमरः । अत्र रेऽधमेति सम्बोधनेन मुहुरलमित्युक्तिपौनः-पुन्यनिवारणेन च रावणं प्रति सीताया महान्क्रोधः त्वां श्रुत-वतीत्यनेन तद्वचनेऽनादरश्च द्योत्यते । प्रत्युत्तरनिगूढार्थस्तु—रेऽधम ! त्वां अलं लवणरहितं मुहुरश्रुतवती इति । नास्ति लः लवणः

ःमाविति विग्रहः तं अलम् । एवं च—समरभुवि पारक्षीणास्य
, रक्षःकुपतिरिति, स्वस्तुत्यां सज्ज इति, अमहितमार्गैकपथिक
, स्त्रीभ्यः प्रणम्र इति, विसत्कीर्तिरिति च त्वं श्रुतोऽसीत्यर्थः।
रभुवि परिक्षीणानि कृशानि आस्यानि मुखानि यस्य स तथो-
। रक्षःकुपतिरिति कर्मधारायोत्तरपदस्तत्पुरुषः । स्वस्तुत्यां
ःसन्नद्धः—'सन्नद्धो वर्मितस्सज्जः' इत्यमरः । महितः
ितो न भवतीत्यमहितः कुत्सितः स चासौ मार्गश्च तस्मि-
स्मिन्पथिकः । स्त्रीभ्यः प्रणम्र इत्यत्र स्त्रीरनुकूलयितुमिति।
क्रियार्थोपपदस्य' इत्यादिना चतुर्थी। प्रणम्रस्त्रीभ्य इत्यत्र 'संहि-
ां खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति पाक्षिको
र्गलोपः । अत्र समरभुवि परिक्षीणास्य इत्यनेन निस्तेजस्त्वं,
ःकुपतिरित्यनेन नीतिविधुरत्वं, स्वस्तुत्यां सज्ज इत्यनेन निर्लज्जत्वं,
हितमार्गैकपथिक इत्यनेनातिनिन्दितत्वं, स्त्रीभ्यः प्रणम्र इत्य-
कामपरिभूतत्वं, विसत्कीर्तिरित्यनेन गुणशून्यत्वं च रावणे
तितं भवति । स्फुटमेवेदं निस्तेजस्त्वादिकमुपपादितं रावणं
ं सीतया श्रीमद्रामायणे—

जनस्थाने हतस्थाने निहते रक्षसां बले।
अशक्तेन त्वया रक्षः कृतमेतदसाधु वै॥
आश्रमं तु तयोश्शून्यं प्रविश्य नरसिंहयोः।
गोचरं गतयोर्भ्रात्रोरपनीता त्वयाऽधम॥

इत्यादिना॥

ननु लवर्णेन साहित्यं राहित्यं वा शब्दस्यैव, न त्वर्थस्य एवं सत्यलं त्वां श्रुतवतीत्यत्रोद्देश्यार्थरूपे रावणे लवर्णराहित्यरूपस्य शब्दधर्मस्य विधानं कथमुपपद्यत इति । यद्यप्यस्त्येवास्पदमाशङ्कायाः तथाऽपि 'उपजिगमिषोर्देव पूर्वं गिरिं ते', 'नरस्य स्वर्भोगभाग्यं विरलोदयस्य', 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यादिषु कालिदासश्रीहर्षमाघादीनां महाकवीनां प्रयोगेषु देवपूर्वत्वादीनामन्यथाऽनुपपत्त्या शब्दपरतयैव निश्चितानामपि गिर्यादिशब्दानामर्थपरताया एवावश्यं वक्तव्यतया महोपाध्यायमल्लिनाथादिभिर्व्याख्यातृभिः प्रदर्शितां शब्दपराणामपि शब्दानां लक्षणयाऽर्थपरताभ्युपगमसरणिमनुसृत्य लवर्णसहितशब्दवाच्यत्वेनोक्तं त्वां लवर्णरहितशब्दवाच्यं श्रुतवतीत्यर्थस्य सुवचत्वान्नैवात्राग्रतश्च क्वचिदीदृशीषु चित्रोक्तिष्वाशङ्कितस्यावकाश इत्यलमनेकमहाजनक्षुण्णेऽपि पथि सञ्चरणमधिक्षिपन्तंप्रत्यनुनयनायासेन ॥

सन्दर्भविरहान्मूले नियमः पारिभाषिकः ।
अवश्यकथनीयोपि नोक्त इत्यत्र कथ्यते ॥
चमत्कारान्तरश्लाघ्याः प्रबन्धास्सन्ति भूरिशः ।
निगूढार्थचमत्कारमेकमेकं क्वचित्क्वचित् ॥
पद्यं वा श्रूयते वाक्यं न तु द्वित्राणि तान्यपि ।
अत एव प्रयत्नेन प्रबन्धोऽयं प्रवर्तितः ॥
वर्णचित्रात्मकोऽत्यन्तनिगूढार्थचमत्क्रियः ।
वर्णचित्रेषु शतशः कल्पनीयेषु सत्स्वपि ॥

गूढार्थस्यानुकूलानि त्रीण्येवात्र मतानि नः ।
च्यावितात्क्षरमित्येकमधिदत्ताक्षरं परम् ॥
प्रतिदत्ताक्षरं त्वन्यदित्येव त्रीणि तानि हि ।
कस्मिंश्चिच्च्याविते वर्णे यत्रार्थोऽन्यः प्रतीयते ॥
चित्रं तदेव विज्ञेयं च्यावितात्क्षरनामकम् ।
कस्मिंश्चिदधिके वर्णे दत्तेऽर्थो यत्र भिद्यते ॥
अधिदत्ताक्षरं नाम चित्रं तदिति बुध्यताम् ।
च्यावितस्यास्पदेऽन्येन प्रतिदत्तेन केन चित् ॥
प्रतीयतेऽन्यो यत्रार्थः प्रतिदत्ताक्षरं हि तत् ।
प्रतिदत्ताक्षरे चित्रे विस्वरं व्यञ्जनाक्षरम् ॥
सङ्केतितं सस्वरं तु च्युतदत्तैकता यदि ।
इतरत्र द्वयोर्यादृक् प्रत्युक्तयर्थानुकूल्यभाक् ॥
तादृगेवाक्षराकारस्सङ्केतास्पदतां गतः ॥

इति । एवं चेदं च्यावितात्क्षरं चित्रम् । अत्र ल इत्यकारसम्बद्धस्यैव व्यञ्जनस्याकृतिस्सङ्केतिता बोध्या । तस्या एव प्रत्युक्तयर्थानुकूलत्वात् । शिखरिणीवृत्तं लक्षणमुक्तम् ॥ १७ ॥

अतल्पं निद्राळू रजनिषु कुवाग्दुर्गततमो
महाकातर्याढ्यो मनसि विधुतप्रोज्ज्वलयशाः ।
प्रधान्मांसादानां बहुविमतलाभो जनकजे
कथं श्लाघ्यो रामः खल तमसकृन्मा स्पृश गिरा

**अतल्पमिति** ॥ रावणस्सीतामाह—अतल्पमित्यादि र
इत्यन्तम् । हे जनकजे! रजनिषु नास्ति तल्पं शय्या यस्मिंस्तः
थातथा निद्रालुर्निद्राशीलः 'स्पृहिगृहि' इत्यादिना आलुच् । नि
द्रालू रजनिष्वित्यत्र 'रोरि' इति रेफलोपे 'ढ्लोपे पूर्व
दीर्घोऽणः' इति दीर्घः । कुवागिति बहुव्रीहिः । अतिशये
दुर्गतो दुर्गततमः अतिदरिद्र इत्यर्थः । 'अतिशायने तमबिष्ठनौ
इति तमप् ।

**निस्स्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ।**

इत्यमरः । कुवाक्चासौ दुर्गमश्चेति विग्रहः विशेषणयोरे
परस्परं विशेष्यविशेषणभावविवक्षायां खञ्जकुब्जादिवत् 'विशेष
विशेष्येण बहुलम्' इति समासः । मनसि महता कातर्येण अ
धैर्येण आढ्यस्समृद्धः अत्यधीरमनस्क इत्यर्थः । कातरस्य भाव
कातर्यम् 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ् ।

**अधीरे कातरस्त्रस्नौ भीरुभीरुकभीलुकाः ।**

इत्यमरः । विधुतं त्यक्तं प्रोज्ज्वलं यशो येन तथोक्तः
मांसादानां रक्षसाम् । कर्मणि षष्ठी । त्रिचतुराणामिति भावः । वधात
हेतोः बहुः विमतानां शत्रूणां लाभो यस्य तथोक्तः सम्पादितानेकशत्रुक
इत्यर्थः । रामः कथं श्लाघ्यः? अत्र रजनिष्वतल्पं निद्रालुरित्यनेन
विषयनिस्स्पृहत्वं, कुवागित्यनेन चाटुसुखाननुकूलत्वं, दुर्गततम इत्य-
नेन सहायसम्पद्विकलत्वं, मनसि महाकातर्याढ्य इत्यनेन निरु-

ग्राहत्वं, विधुतप्रोज्ज्वलयशा इत्यनेन पौरुषाभिमानशून्यत्वं, मांसा-
ानां वधाद्धद्दुविमतलाभ इत्यनेन अकुशलपरिणामत्वं च रामे
ावणेन द्योतितम् । स्पष्टमेवेदमुक्तं श्रीरामायणे—

किं करिष्यसि रामेण सुभगे चीरवाससा ।
निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः ॥
व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥

इत्यादिना । एवं च नैव रामस्य त्वय्यनुरागः सत्यप्यनुरागे स
हस्थां त्वां न कथमप्यवाप्तुं शक्नुयादिति भावः । आविष्कृतश्चायं
ीरामायणे—

न हि वैदेहि रामस्त्वां द्रष्टुं वाऽप्युपलप्स्यते ।
पुरोबलाकैरसितैर्मेघैर्ज्योत्स्नामिवावृताम् ॥
न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः ।
हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिव ॥

इति । सीता प्रत्याह—खलेत्यादि गिरेत्यन्तम् । खल! दुरात्मन्!
ासकृत् मुहुः तं रामं गिरा वाचा मा स्पृश मास्प्राक्षीः नामोच्चारणमेव
लु वाचा स्पर्शो नाम । तन्मा कार्षीरित्यर्थः । तन्नामकीर्तनेऽप्यनर्ह-
ात्त्वेति भावः । उक्तं हि श्रीरामायणे—'दास्येऽप्यस्य न युज्यसे'
ति । अनेन पुण्यश्लोकत्वं रामस्य, महापापित्वं च रावणस्य द्योतितं
वति । प्रत्युत्तरनिगूढार्थस्तु—खल! असकृत् तं त इत्याकारकं वर्णं
ारा मा स्पृशेति । तवर्णं विरहय्योक्तेन त्वद्वचनेनैव रामस्य श्लाघ्यत्वं

व्यक्तीभविष्यतीत्यर्थः । एवं च—रजनिष्वल्पं निद्रालुरिति, कुवाग्दुर्गम इति, मनसि महाकार्याढ्य इति, विधुप्रोज्ज्वलयशा इति, मांसादानां वधाद्बहुविमलाभ इति चोक्त्वा रामस्य श्लाघ्यतां जानीहीत्यर्थः फलितः । रजनिषु अल्पमीषत् परिमितांशं यथातथेत्यर्थः ।

**द्वितीययामपश्चार्धं तृतीयप्रहरोऽखिलः ।**
**स्वापकालः प्रतिनिशं नित्योद्योगस्य भूपतेः ॥**

इति कामन्दकोक्तेः । निद्रालुः निद्राशीलः कुवाग्भिः गर्हावचनैः दुर्गमः दुष्प्रापः । गमेः खल्प्रत्ययः । मनसि महद्भिः अनितरसाध्यैः कार्यैः रक्षःकुलोन्मूलनादिभिः आढ्यस्सान्द्रः सततसङ्कल्पितानन्यसाध्योद्योग इत्यर्थः । विधुश्चन्द्रः—'विधुस्सुधांशुश्शुभ्रांशुः' इत्यमरः । तद्वत् प्रोज्ज्वलं यशो यस्य स तथोक्तः । मांसादानां वधात् बह्वी विमला च आभा यस्य तथोक्तः । अत्र रजनिष्वल्पं निद्रालुरित्यनेन—

**अल्पाहारोऽल्पनिद्रश्च स भवेद्योऽतिभाग्यवान् ।**

इति सामुद्रिकोक्तमहाभाग्यत्वसहकृतमप्रमत्तत्वं, कुवाग्दुर्गम इत्यनेन दोषसामान्यशून्यत्वं, मनसि महाकार्याढ्य इत्यनेन पुरुषकारधुरीणत्वं, विधुप्रोज्ज्वलयशा इत्यनेन सकललोकाभिनन्दनीयगुणत्वं, मांसादानां वधाद्बहुविमलाभ इत्यनेन जयश्रीसान्निध्यविद्योतमानत्वं च श्रीरामे द्योतितं भवति । इदमपि च्यावितावक्षरमेव चित्रम्—

कस्मिंश्चिच्च्याविते वर्णे यत्रार्थोऽन्यः प्रतीयते ।
चित्रं तदेव विज्ञेयं च्यावितक्षरनामकम् ॥

इति तल्लक्षणात् । वृत्तं पूर्ववत् ॥ १८ ॥

**रामो वाच्यतिविप्रियोऽतिचलितश्रीस्तन्वि नीचं वपुर्बिभ्रत्काननसीम्नि राक्षसचयायत्तस्स्वयं वेत्सि तम् । मां पश्यातिविचक्षणोऽस्मि बहुधा चापैकवीरोऽस्म्यहं लब्धश्रीप्रचयस्तथाऽस्मि किमरे चेलं बधानासकृत् ॥ १९ ॥**

राम इति ॥ रावणस्सीतामाह—राम इत्यादि तथाऽस्मीत्यन्तम् । तन्वि! कृशाङ्गि! 'वोतो गुणवचनात्' इति वैकल्पिकङीषन्तस्य तनुशब्दस्य सम्बुद्धयन्तं रूपम् । रामः वाचि अतिविप्रियः अतिविप्रियवागित्यर्थः । अतिचलिता बहुदूरविभ्रष्टा श्रीः सम्पत् यस्मात्स तथोक्तः । नीचं निकृष्टं वपुश्शरीरं बिभ्रद्दधानः । बिभर्तेर्लटश्शत्रादेशः । 'नाभ्यस्ताच्छतुः' इति नुमभावः । काननसीम्नि अरण्यप्रान्ते राक्षसानां चयस्य सङ्घस्य आयत्तः अधीनः 'अधीनो निघ्न आयत्तः' इत्यमरः । तं रामं स्वयं वेत्सि तस्य प्रकृतिमाकृतिं स्थितिं च स्वयमनुभवादेव जानासीत्यर्थः । मां पश्येति सवक्षस्पर्शमात्मनो निर्देशः । अविदितांस्त्वया मम गुणान्वदाम्याकर्णयेत्यर्थः । अहं बहुधा बहुभिः प्रकारैः अति-

विचक्षणः अत्यन्तमभिज्ञः अस्मि बहून्वेदितव्यान् सम्यग्वि
वानस्मीत्यर्थः । 'धीमांत्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः'
मरः । चापे धनुषि विषये एकः अद्वितीयः वीरोऽस्मि ।
ष्केष्वनितरसाधारणोऽहं वीरोऽस्मीत्यर्थः । तथा अद्वितीयत्वप्र
णैवेत्यर्थः लब्धः । श्रियां सम्पदां प्रचयस्समुच्चयो येन तथोक्त
स्मि । उक्तं चैवमेव रावणेन श्रीमद्रामायणे—

न रामस्तपसा देवि न बलेन न विक्रमैः ।
न धनेन मया तुल्यस्तेजसा यशसाऽपि वा ।
ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे यशश्च मे ॥

इत्यादिना । अत्र रामो वाचीत्यादिना श्रीरामे गगन
मायमानानां दोषाणां मां पश्येत्यादिना स्वस्मिन्नसम्भावितानां ग
नां चोपन्यासेन कथमपि सीतामावर्जयेयमिति रावणस्य दु
निवेशः, तेन तस्य महच्च कामान्धत्वं द्योत्यते । सीता प्रत्याह
किमित्याद्यसकृदित्यन्तम् । अरे! नीच! किं जल्पसीति शे
असकृत् मुहुः एकैकवचन इत्यर्थः । चेलं बधान वचनसङ्ख
मनुसृत्य उत्तरीयाञ्चले ग्रन्थीन् कुरुष्वेत्यर्थः । अस्ति खलु त
विप्रियवादिनं जनं प्रति यदाऽहमेषां वचनानामनुरूपं दण्डनं
कारयिष्यामि तदा त्वमात्मनोक्तं विस्मरन्नाहं तथाऽवदमित्यात्म
मपराधाच्च्यावयेः सति तु ज्ञापकेऽस्मिन्वस्त्रग्रन्थौ नैव तथा
स्मरेरित्यभिप्रायेण विप्रियश्रवणकुपितैर्जनैरुच्यमानं वस्त्रप्रान्तं ब

ते वचनम् । तद्भङ्गीमनुसृत्योक्तमिदं सीताप्रतिवचनम् । अत
ात्र लोकोक्तिरलङ्कारः—

लोकप्रवादानुकृतिर्लोकोक्तिरिति कथ्यते ॥

ते तल्लक्षणात् । अत्र किमर इत्यादिना प्रतिवचनेन सीता-
महानमर्षो द्योत्यते । प्रतिवचननिगूढार्थस्तु—अरे ! किं?
स्पसीति शेषः । प्राग्वत् चे चकारस्थाने इत्यर्थः । अस-
त् अनेकास्वप्यावत्तिष्वित्यर्थः । लं लकारं बधान योजय ।
ं च—"रामो वाल्यतिविप्रियोऽतिललितश्रीस्तन्वि नीलं वपुर्बिभ्र-
ाननसीम्नि राक्षसलयायत्तस्स्वयं वेत्सि तं मां पश्यातिविलक्ष-
ऽस्मि बहुधाऽऽलापैकवीरोऽस्म्यहं लब्धश्रीप्रलयस्तथाऽस्मि" इति
ेत्यर्थः । रामः वाल्यतिविप्रियः वालिनः तन्नाम्नस्सुग्रीवाग्रजस्य
पिराजस्य अतिविप्रियः अत्यन्ताहितः अतर्किताद्धननादिति भा-
ः । अतिललिता श्रीः यस्य तथोक्तः । नीलं मेघश्यामल-
त्यर्थः । वपुः बिभ्रत् काननसीम्नि राक्षसानां लये नाशे
ायत्तः एकाग्र इत्यर्थः । तं स्वयं वेत्सि । मां पश्य अहं
तिविलक्षणः अत्यन्तविकृताकार इत्यर्थः । अस्मि बहुधा आ-
पे एकस्मिन् न तु युद्धे वीरः अस्मि तथा लब्धः श्रियः
म्पदां प्रलयः अत्ययः येन तथोक्तोऽस्मि । 'दिष्टान्तः प्रलयोऽ-
यः' इत्यमरः । प्रतिदत्ताक्षरमिदं चित्रम्—

च्यावितस्यास्पदेऽन्येन प्रतिदत्तेन केनचित् ।
प्रतीयतेऽन्यो यत्रार्थः प्रतिदत्ताक्षरं हि तत् ॥

इति तल्लक्षणात् । अतोत्र विस्वर एव व्यञ्जने सङ्केतः—'प्र
दत्ताक्षरे चित्रे विस्वरं व्यञ्जनाक्षरम् । सङ्केतितम्' इत्युक्तेः । हे
मिति सङ्केतभेदनस्थले तु चकारलकारोत्तरावकारावुच्चारणार्थौ ।
मग्रतश्च प्रतिदत्ताक्षरचित्रेषु सर्वत्र बोध्यम् । शार्दूलविक्री
वृत्तम् ॥ १९ ॥

**पश्याम्यन्यमुदारभोगविषये तुल्यं न मे कश्चि**
**प्यन्यःकोऽहमिवास्ति भाजनमुमापत्त्यादरस्यापि**
**मद्भूतनये मुखाब्जविकसत्तेजा रणे कश्श्रु**
**पापिञ्जल्प यथास्पृहं मम पुनर्मौनादरो रोचते॥२**

पश्यामीति ॥ रावणस्सीतामाह—पश्यामीत्यादि श्रुत इत्यन्त
हे! भूतयने! उदारः महान् यो भोगः सुखं स एव विष
वस्तु तस्मिन् मे तुल्यं अन्यं कञ्चिदपि न पश्यामि अपि
अहमिव उमापतेः शिवस्य यः आदरः अनुग्रह इत्यर्थः । त
भाजनं पात्रं अन्यः कोस्ति? न कोपीत्यर्थः । उमापत्त्यादरस्
त्यत्र 'संहितायामनचि च' इति तकारस्य पाक्षिकं द्वित्वम् । मद्
मया तुल्यम्—'तेन तुल्यम्' इत्यादिना तृतीयान्ताद्वतिप्रत्ययः
कः पुमान् रणे मुखान्यब्जानीवेत्युपमितसमासः तेषु विकस
विजृम्भमाणमित्यर्थः । तेजः यस्य तथोक्तः श्रुतः त्वयेति शेष
अहमेव भोगिष्वीश्वरानुग्रहपात्रेषु रणवीरेषु चाग्रगण्य इत्यर्थः
सीता प्रत्याह—पापिन्नित्यादि रोचत इत्यन्तम् । पापिन्! यथ

स्पृहं यथेच्छं जल्प कत्थस्वेत्यर्थः । मम पुनः मम तु मौने अभाषणे आदरः रोचते अप्रतिभाषमाणाऽहं तूष्णीमेवावस्थातुमिच्छामीत्यर्थः । एतेन वृथैव त्वमात्मानं श्लाघस इति रावणं प्रत्यवज्ञा द्योत्यते । प्रत्युत्तरनिगूढार्थस्तु—पापिन्! यथास्पृहं जल्प मम पुनः मौ मु इत्यस्मिन्वर्णे आदरः न रोचत इति । एवं च—"पश्याम्यन्यदारभोगविषये तुल्यं न मे कश्चिदप्यन्यः कोऽहमिवास्ति भाजनमापत्त्या दरस्यापि च मद्वद्भूतनये खाब्जविकसत्तेजा रणे कश्श्रुतः" इत्येव त्वया वक्तुमुचितमित्यर्थः । भूतनये! जानकि! अन्यदारभोगविषये परकळत्रोपभोगविषये मे तुल्यं अन्यं कश्चिदपि न पश्यामि अत एव अहमिव आपत्त्याः विपत्तेः अपि च दरस्य भयस्य—'दरोऽस्त्री शङ्खभययोः' इति वैजयन्ती, 'दरत्रासौ भीतिर्भीः' इत्याद्यमरश्च । भाजनं अन्यः कोऽस्ति । अहमेव विपत्तेर्भयस्य चासाधारण्येन पात्रीभूत इत्यर्थः। पारदारिकाणां नित्यविपत्तेर्नित्यभयस्य चावश्यम्भावादिति भावः । मद्वत् रणे खाब्जमिव आकाशकमलमिव विकसत् तेजो यस्य तथोक्तः मिथ्यातेजस्क इत्यर्थः । प्रसिद्धमेव वन्ध्यापत्यशशविषाणयोरिवाकाशकमलस्य मिथ्यात्वम् । कश्श्रुतः न कश्चिदप्यहमिव रणेऽतिनिस्तेजस्कमुख इत्यर्थः । अनेन रावणेऽतीव रणभीरुत्वं द्योत्यते । स्पष्टमेवेदमुक्तं सीतया श्रीरामायणे—

**किञ्चिद्वीर्यं तवानार्य यो मां भर्तुरसन्निधौ ।**
**अपहृत्यागतः पाप तेनादृष्टो महात्मना ॥**

शूरेण धनदभ्रात्रा बलैस्समुदितेन च ॥
अपोह्य रामं कस्माद्धि दारचौर्यं त्वया कृतम् ॥

इत्यादिना । च्यावितांक्षरमिदं चित्रम् । शार्दूलविक्रीडितं वृत्तम् ।

**स्मृत्वा मां हृदि जायतेऽतिविनयः क्रव्यादमात्रेऽपि ते भर्ता भूमिसुते सदाऽनृतगुणस्तेऽतोपि सौख्यं कुतः ॥ जाते मय्यसुनायके तव सुखं स्यादेव किं दूयसे किं रे जल्पसि दुर्वचः खलमते भूयोपि नेदं वद ॥ २१ ॥**

स्मृत्वेति ॥ रावणस्सीतामाह—स्मृत्वेत्यादि दूयस इत्यन्तम् भूमिसुते ! सीते ! अनृताः असत्याः अनभिज्ञैरारोपिता इत्यर्थः गुणाः शौर्यधैर्यादयो यस्य तथोक्तः ते तव भर्ता रामः सदा मां हृदि स्मृत्वा मम राक्षसराजत्वेन राक्षसेषु सर्वत्र मदीयत्वमनुचिन्त्येत्यर्थः । क्रव्यादमात्रेऽपि राक्षससामान्येऽपि विषये— ' मात्रं कात्स्न्र्येऽवधारणे ' इत्यमरः । घातुकत्वादिस्वजातिधर्मविरहादवगणनीये राक्षससंज्ञामात्रशरण्ये यस्मिन्कस्मिंश्चिद्यातुधानेऽपीति मात्रशब्दापिशब्दयोरर्थः । अतिशयितः विनयः प्रश्रयो यस्य तथोक्तः जायते भवति अतोपि एतस्माद्रामादपि हेतोः । एतच्छब्दात्पञ्चम्यास्तासिल् । ते तव सौख्यं सुखं कुतः कुत्र स्यादिति शेषः । नैव स्यादित्यर्थः । शूरस्यैवाश्रितजनरक्षणसमर्थत्वादिति

भावः । मयि असुनायके प्राणनाथे जाते सति तव सुखं स्यादेव किं दूयसे कुतो हेतोर्दुःखिताऽसि सुखसाधनानामैश्वर्यायत्तत्वादैश्वर्यस्य शौर्यायत्तत्वाच्छूरं मामेव समाश्रितायास्तव सुखं स्यान्न तु भीरुं रामम् । इदमनाकलय्य वृथैव त्वं दूयस इति भावः । उक्तं चेदं रावणेन श्रीरामायणे—

> देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये ।
> विचित्राणि च माल्यानि चन्दनान्यगरूणि च ॥
> विविधानि च वासांसि दिव्यान्याभरणानि च ।
> महार्हाणि च पानानि शयनान्यासनानि च ॥
> गीतं नृत्तं च वाद्यं च लभ मां प्राप्य मैथिलि ॥

इत्यादिना । सीता प्रत्याह—किमित्यादि वदेत्यन्तम् । रे ! खलमते ! दुर्बुद्धे ! दुर्वचः किं जल्पसि ? कुतः प्रलपसि ? भूयोऽपि पुनरपि इदं दुर्वचः न वद मा वादीरित्यर्थः । नञत्र निषेधार्थकः । "नञभावनिषेधयोः" इत्युक्तेः । प्रत्युत्तरनिगूढार्थस्तु—रे ! खलमते ! भूयोपि किं दुर्वचः जल्पसि ? अर्थः प्राग्वद्बोध्यः । ने नकारस्थान इत्यर्थः । दं दकारं वद । एवं च—"स्मृत्वा मां हृदि जायतेऽतिविदयः क्रव्यादमात्रेऽपि ते भर्ता भूमिसुते सदादृतगुणस्तेऽतोपि सौख्यं कुतः । जाते मय्यसुदायके तव सुखं स्यादेव किं दूयसे" इति वदेत्यर्थः । हे ! भूमिसुते ! सद्भिः गुणग्राहिभिस्साधुभिः आदृताः गुणाः शौर्यधैर्यादयो यस्य तथोक्तः ते भर्ता मां हृदि स्मृत्वा त्वदपहरणेन

महापराधिनं मामनुचिन्त्येत्यर्थः । क्रव्यादमात्रेऽपि मज्जातीय एवापि स्वयमनपराधिन्यपीत्यर्थः । अतिविदयः अत्यन्तनिर्दयः जायते । अतोपि एतस्माद्रामादपि अपादानात् ते तव कुतः कस्मादन्यस्मात्सौख्यं स्यादिति शेषः । सकलरक्षःकुलोन्मूलनपर्याप्तशौर्यसम्पत्कात् तस्मादेव सौख्यं नान्यस्मादित्यर्थः । ननु—तथाविधादपि तस्मान्न खल्विदानीं मम सुखमिति चेदाह—जात इत्यादि । मयि असुदायके प्राणदायिनि जाते सति रणभुवि मृते सतीत्यर्थः । ददातेः कर्तरि ण्वुल्यकादेशः । 'आतो युक्' इत्यादिना युगागमः । शेषषष्ठ्या समासः । 'तृजकाभ्यां कर्तरि' इति प्रतिषेधात् याजकादेश्चानाकृतिगणत्वात् । तव सुखं स्यादेव किं ब्रूयसे ? तं कालमप्रतीक्षमाणैवात्रान्तरे कुतो दुःखिताऽसीत्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् । वृत्तं पूर्ववत् ॥ २१ ॥

**जुष्टो मन्त्रिजनेन सङ्गतधिया मद्वन्न कश्चित्प्रभुः**
**प्राप्तात्युज्ज्वलकीर्तिसंहतिरहं तैस्तैश्चरित्रैर्निजैः ।**
**रामो नार्हति तुल्यतां जनकजे सङ्ग्रामसिंहस्य मे**
**सर्वं सत्यमरे परं त्वनुचितस्संन्यास एकस्तव ॥**

जुष्ट इति ॥ रावणस्सीतामाह—जुष्ट इत्यादि म इत्यन्तम् । जनकजे ! जानकि ! मद्वत् मया तुल्यं अहमिवेत्यर्थः । तृतीयान्ताद्वतिः । सङ्गता हृदयङ्गमा देशकालपात्राद्यनुरोधेन सामाद्युपायप्रयोगविज्ञानरूपत्वादिति भावः । धीर्यस्य तथोक्तेन मन्त्रिजनेन जुष्टः

सेवितः प्रभुः कश्चित् कोपि न नास्ति । **अहमेक एव सन्म-न्त्रिपरिवृतः** प्रभुरित्यर्थः । अत एव अहं निजैः तैस्तैः **चरित्रैः** कुबेरनिरसनपुष्पकापहरणलङ्काक्रमणादिभिरिति भावः । **प्राप्ता** अत्युज्ज्वलानां कीर्तीनां संहतिर्येन तथोक्तः अस्मीति शेषः । 'स्त्रियां तु संहतिर्बृन्दम्' इत्यमरः । सङ्ग्रामे **युद्धे** सिंहस्य तद्वद्दुर्धर्षस्येत्यर्थः । मे तुल्यतां रामः नार्हति मम च रामस्य च मेरुसर्षपयोरिव महदन्तरमित्यर्थः । सीता प्रत्याह—**सर्वमि-**त्यादि तवेत्यन्तम् । अरे! तुच्छ! सर्वं त्वदुक्तमखिलं सत्यम-वितथम् । परं तु—संन्यास एकः यतिवेष एवेत्यर्थः । तव अनुचितः अनर्हः यदि त्वं सन्मन्त्रिसहायरसत्वाद्भुतचरित्रस्समरवी-रश्च कुतस्तर्हि मदपहारसमये रघुवीरात्संत्रस्य यतिवेषेणात्मानम-पावृणोः, अतस्त्वदुक्तस्स्वोत्कर्षस्सर्वोप्यपहासास्पदमेव । इदमबुद्ध्वा किं वृथा कत्थस इत्यर्थः । प्रतिवचननिगूढार्थस्तु—अरे! सर्वं त्वदुक्तिवर्णजालमखिलं सत्यं उचितमित्यर्थः । परं तु **समः स-**मित्युपसर्गस्य यद्वा अनुस्वारपरकस्य स इति वर्णस्य न्यास एकः न्यसनमेव तस्मिन् वर्णजाले इत्यर्थाल्लभ्यते अनुचित इति । एवं च—यथायोगं परसवर्णपरकं वाऽनुस्वारपरकं वा स इति वर्णं परिहृत्य "जुष्टो मन्त्रिजनेन गतधिया मद्वन्न कश्चि-त्प्रभुः प्राप्तात्युज्ज्वलकीर्तिहतिरहं तैस्तैश्चरित्रैर्निजैः रामो नार्हति तुल्यतां जनकजे ग्रामसिंहस्य मे" इति वदेत्यर्थः । मद्वत् गता धीर्यस्मात्तथोक्तेन बुद्धिहीनेनेत्यर्थः । मन्त्रिजनेन जुष्टः प्रभुः कश्चित्

कोपि न नास्ति । अहं निजैः तैस्तैश्चरित्रैः यतिवेषधारणादि-भिरिति भावः। प्राप्ता अत्युज्ज्वलानां कीर्तीनां हृतिः हानिः येन तथोक्तः अस्मीति शेषः । ग्रामसिंहस्य शुनकस्य—'श्वा ग्राम-सिंहश्शुनको भषको ग्रामपालकः' इति निघण्टुसारे । तद्वन्नी-चस्येत्यर्थः । मे तुल्यतां रामः पुरुषोत्तम इति भावः । नार्हे-ति । च्यावितात्क्षरमिदं चित्रम् । वृत्तं प्राग्वत् ॥ २२ ॥

**मूर्त्या मर्कटसंनिभस्य नियमैस्संशोषणात्का-नने काकुत्स्थस्य सदोटजस्थितिजुषो रक्षोजये का कथा । क्वैषोऽहं जटयाऽन्वितोऽनिशमटव्यध्वाश्र-यस्स क्व ते भर्ता जानकि रे विटोक्तिपरिपाट्येवो-चिता ते न किम् ॥ २३ ॥**

मूर्त्येति ॥ रावणस्सीतामाह—मूर्त्येत्यादि जानकीत्यन्तम् ॥ हे ! जानकि ! कानने नियमैः उपवासादिभिः संशोषणात् कर्शनात् हेतोः मूर्त्या वपुषा मर्कटसंनिभस्य तद्वद्विकृतस्येत्यर्थः । सदा उटजे पर्णशालायां स्थितिं अवस्थानं जुषते सेवत इति तथो-क्तस्य । 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः । जुषेः कर्तरि क्विप् । काकुत्स्थस्य कर्तुश्शेषत्वविवक्षायां षष्ठी । रक्षसां जये विषये का कथा ? उक्तविधो रामः राक्षसान् जेष्यतीति कथं कथनीयमित्यर्थः । सोऽत्रागत्य राक्षसान् जित्वा मामितो नेष्य-तीत्यहो ते दुराशेति भावः । एषोऽहं क्व एष इति मणि-कनकाभरणाम्बरविभूषितत्वाद्यभिप्रायेणात्मनो निर्देशः । जटया ।

जातावेकवचनम् । अन्वितः जटिल इत्यर्थः । अनिशमजस्रम् । अटव्यध्वा अरण्यमार्गः आश्रयो यस्य तथोक्तः स ते भर्ता रामः क । मम तस्य चोभयोः कल्पद्रुमवटद्रुमयोरिव महदन्तरमित्यर्थः । तादृशेऽपि तस्मिन्ननुरागेण मामपीदृशं नाद्रियस इत्यहो ते महन्मौग्ध्यमिति भावः । सीता प्रत्याह—र इत्यादि न किमित्यन्तम् । रे! नीच! विटानां षिङ्गानां उक्तिपरिपाटी वचनानुक्रम एव ते तव उचिता न किम्? उचितैवेत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! ते उक्तिपरिपाटी मूर्त्या मर्कटेत्यादिः प्राग्वदर्थः । विटा विगतटवर्णैव उचिता न किम्? वक्तुमिति शेषः उचितैवेत्यर्थः । एवं च—'मूर्त्या मर्कट' इत्यादि प्रागुक्तं वचनं, "मूर्त्यामर्कसंनिभस्य नियमैस्संशोषणात्कानने काकुत्स्थस्य सदोजस्थितिजुषो रक्षोजये का कथा क्वैषोऽहं जयान्वितोऽनिशमव्यध्वाश्रयस्स क ते भर्ता जानकि" इति त्वया वक्तुमुचितमित्यर्थः । हे! जानकि! कानने नियमैः संशोषणात् मूर्त्यां वपुषि अर्कसंनिभस्य तपस्संभृतया तेजस्सम्पदेति भावः । सतः प्रशस्तस्य—'प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः । ओजसः प्रभावस्य—'ओजो दीप्तिप्रभावयोः' इति विश्वः । स्थितिं जुषत इति तथोक्तस्य काकुत्स्थस्य रक्षोजये का कथा निरतिशयमार्षं क्षात्रं च तेजोविशेषमासेदुषा रघुवीरेण लीलयैव राक्षसा निहन्यन्ते इति सिद्ध एवार्थः । कुतः पुनरपि वाचा कथनीय इत्यर्थः । एषः एवं दुरशील इत्यर्थः । अहं क? अनिशम-

जस्त्रं अन्वयक्रियाविशेषणमेतत् जयेन अन्वितः जित्वर इत्यर्थः। अव्यध्वः सन्मार्ग आश्रयो यस्य तथोक्तः सदाचारसम्पन्न इत्यर्थः। विरुद्धोऽध्वा व्यध्वः स न भवतीत्यव्यध्वः सन्मार्गः। 'उपसर्गादध्वनः' इति समासान्तोऽच्प्रत्ययः। 'व्यध्वो दुरध्वो विपथः' इत्यमरः। स ते भर्ता क्व? मम च तस्य च वायसवैनतेययोरिव महदन्तरमित्यर्थः। स्वयमेवेदमुक्तवती सीता श्रीरामायणे—

यदन्तरं वायसवैनतेययोस्तदन्तरं दाशरथेस्तवैव च।

इति। इदं च च्यावितात्क्षरं नाम चित्रम्। वृत्तं पूर्ववत्॥

**त्वल्लाभे मम निग्रहे जययशोलाभेऽप्यसत्यादरो भर्ता ते मिथिलेन्द्रपुत्र्यसमरश्लाघ्यः क्व वा तिष्ठतु। मय्याधेहि दृशं दयारसहितां क्षिप्रं भवेच्छर्म ते किं संजल्पसि यामिनीचरकुलोच्छेदिन्नरे दुर्मते॥ २४॥**

त्वल्लाभ इति॥ रावणस्सीतामाह—त्वल्लाभ इत्यादि शर्म त इत्यन्तम्। हे! मिथिलेन्द्रपुत्रि! समरश्लाघ्यो न भवतीत्यसमरश्लाघ्यः अवीर इत्यर्थः। अत एव त्वल्लाभे तव प्राप्तौ मत्सकाशादिति भावः। मम निग्रहे जयेन यद्यशः तस्य लाभेऽपि। समासेऽसमासे च सर्वत्र कर्मणि षष्ठी। असत्यः आदरो यस्य तथोक्तः ते भर्ता रामः क्व वा तिष्ठतु तादृशात्तस्मा.

त्सुखावाप्तिदुराशां जहिहीत्यर्थः । दयैव रसः तेन चिरमयं माम-भ्यर्थयते तपस्वीत्यनुकम्पयेत्यर्थः । हितां प्रसन्नां दृशं मयि आधेहि निधेहि ते तव क्षिप्रं अविलम्बेनैव, शर्म सुखं भवेत् मयि प्रसन्नाया एव तव सुखं नान्यथेत्यर्थः । सीता प्रत्याह— किमित्यादि दुर्मत इत्यन्तम् । यामिनीचराणां कुलमुच्छिनत्तीति तथोक्तस्य सम्बुद्धिः दुर्मते! अरे! तुच्छ! किं संजल्पसि? मैवं पुनस्संजल्पीरित्यर्थः । यामिनीचरकुलोच्छेदेनान्नान्यत्फलमस्य संज-ल्पितस्येति भावः। अनेन महान् क्रोधस्सीताया द्योत्यते । प्रति-वचननिगूढार्थस्तु—यामिनीचरकुलोच्छेदिन्! अरे! दुर्मते! सं स इत्याकारकवर्णं किं जल्पसि मा तं जल्पीरित्यर्थः । एवं च— 'त्वल्लाभे मम निग्रहे जययशोलाभेऽप्यत्यादरो भर्ता ते मिथिले-न्द्रपुत्रचमरश्लाघ्यः क्व वा तिष्ठतु मय्याधेहि दृशं दयारहितां क्षिप्रं भवेच्छर्म ते' इति वदेत्यर्थः । हे! मिथिलेन्द्रपुत्रि! त्वल्लाभे मम निग्रहे जययशोलाभेऽपि अतिशयितः आदरो यस्य तथोक्तः । अमरैः देवैः श्लाघ्यः स्तुत्यः किमुतान्यैरिति भावः। ते भर्ता क्व वा तिष्ठतु । दयारहितां सत्यपि पातिव्रत्यमहिम्नि कथमहं शापतः प्राणिहिंसां कुर्यामित्यनुकम्पया रहितामित्यर्थः। दृशं मयि आधेहि दाहात्मिकया दृशा मां पश्येत्यर्थः । क्षिप्रं तव शर्म भवेत् महानुभावो रामो मां निहनिष्यतीत्यसंशयमेव। किं तु—तेनैवात्रागतेनायं निहन्यतां ततोऽस्माद्बन्धनाद्विमुक्ताया मम सुखं स्यादिति किं तवानया चिरकालप्रतीक्षया पातिव्रत्याग्नि-

नैव मां दग्ध्वा क्षिप्रं सुखमवाप्नुहीति तात्पर्यार्थः । च्याविताक्षरमिदं चित्रम् । वृत्तं पूर्ववत् ॥ २४ ॥

**क्षोणीनन्दिनि कोऽस्ति भासुरतमो मद्वत्त्रिलोक्यामपि स्यात्किं मे चरिते श्रुते नवसुधोदन्तश्रुतीच्छा सताम् । मां लब्ध्वा सुखराशिभागियमिति प्रख्यायसे नान्यथा वाचोऽस्याः कुमते भवेत्तव वृथाऽसुत्यागतस्सार्थता ॥ २५ ॥**

क्षोणीति ॥ रावणस्सीतामाह—क्षोणीत्याद्यन्यथेत्यन्तम् । हे! क्षोणीनन्दिनि! त्रिलोक्यामपि त्रिष्वपि लोकेष्वित्यर्थः । मद्वत् मया तुल्यं 'तेन तुल्यम्' इति वतिः । अहमिवेत्यर्थः । 'प्रत्ययोत्तरपदयोश्च' इत्यस्मदो मपर्यन्तस्य मादेशः । अतिशयेन भासते ताच्छील्येनेति भासुरतमः । 'भञ्जभासमिदो घुरच्' इति घुरच्प्रत्ययः । 'तदन्तादतिशायने तमप्' इति तमप् । कोऽस्ति न कोपीत्यर्थः । मे मम चरिते दिक्पालाक्रमणादौ इति भावः । तत्प्रतिपादके वाङ्मय इत्यर्थः । श्रुते सति । सतां विदुषाम्—'सन् सुधीः कोविदो बुधः' इत्यमरः । नवायाः सुधायाः य उदन्तः वार्ता माधुर्यादिगुणप्रशंसिनी कथेत्यर्थः । तस्य श्रुतौ श्रवणे इच्छा स्यात्किं न स्यादेवेत्यर्थः । सुधामप्यवधीरयति माधुर्येण मम चरित्रमित्यर्थः । त्वं मां लब्ध्वा इयं सीता सुखानां राशिं भजत इति सुखराशिभाक् 'भजो ण्विः' इतिण्विः । इति प्रख्या-

यसे प्रसिद्धया निगद्यसे । अन्यथा—मां न लभसे चेदित्यर्थः । न । सुखराशिभागिति न प्रख्यायस इत्यर्थः । जगत्यहमेक एव सकलसुखशेवधिः पुमानिति भावः । सीता प्रत्याह—वाच इत्यादि सार्थतेत्यन्तम् । रे ! कुमते ! दुर्बुद्धे ! अस्याः प्रागुक्तायाः तव वाचः वचनस्य । वृथा व्यर्थं यथातथा इष्टसिद्धिरूपप्रयोजनविरहेणैवेत्यर्थः । अमूनां प्राणानां त्यागतः त्यागेन सार्थता साफल्यं भवेत् प्राणत्याग एव तवास्य प्रलपितस्य फलं न ततोऽन्यत्किञ्चिदपीत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे ! कुमते ! अस्याः क्षोणीत्यादेरन्यथेत्यन्तायाः तव वाचः वृथा व्यर्थः स चासौ सुश्च तस्य समुचितार्थबोधनाननुकूलत्वाद्व्यर्थस्य सु इत्याकारकस्य वर्णस्येत्यर्थः । त्यागतः सार्थता भवेत् । एवञ्च—क्षोणीत्यादि त्वदुक्तं वचनं सु इत्याकारकवर्णविरहेण "क्षोणीनन्दिनि कोऽस्ति भारतमो मद्वत्त्रिलोक्यामपि स्यात्किं मे चरिते श्रुते न वधोदन्तश्रुतीच्छा सतां मां लब्ध्वा खराशिभागियमिति प्रख्यायसे नान्यथा" इत्युक्तं चेदुचितार्थं भवेदित्यर्थः । हे ! क्षोणीनन्दिनि ! त्रिलोक्यामपि मद्वत् भारतमः सकलसज्जनप्रतिकूलाचरणेन पारभरितत्वात्पापिष्ठस्य च लोकभारभूतत्वादिति भावः । कोऽस्ति अहमेक एव तादृश इत्यर्थः । मे चरिते परदारहरणादौ श्रुते सति सतां सज्जनानां वधस्य मत्कर्मकस्य मे इत्यस्योभयत्रानुषङ्गात् य उदन्तः तस्य श्रुतौ श्रवणे इच्छा न स्यात्किं 'मदीयं दुश्चरितमाकर्णयन्तस्साधवस्सत्वरमस्य खलस्य संहारकथा

श्रोतव्या' इति नाभिलषेयुः किमित्यर्थः । सकलसज्जनाभिमत-वधोऽहं दुरात्मेति भावः । त्वं मां लब्ध्वा इयं खरं गर्दभं अश्नातीति खराशी । ताच्छील्ये णिनिः । तं भजतीति खराशिभाक् इति प्रख्यायसे न अन्यथा गर्दभभक्षकसंसर्गवतीयामिति प्रथां यद्यभिलषसि तर्हि मामेव भजेत्यर्थः । अहमेक एव गर्दभभक्षक इति भावः । 'रासभा गर्दभाः खराः' इत्यमरः । इदं च्याविताक्षरं चित्रम् । वृत्तं पूर्ववत् ॥ २५ ॥

**तापोन्मेषविवर्जितो युधि मितौजस्काभिमुख्यातिगस्सीते सादितदुर्जयप्रतिरथः कृत्या विमूढाशयः । स्थानायत्तजयेन्दिरश्च किमहं श्रोत्रेऽस्मिलग्नो न ते प्रागेव त्वमरे प्रसङ्गत इह श्रोत्रेऽसि लग्नो मुहुः ॥ २६ ॥**

तापोन्मेषेति ॥ रावणस्सीतामाह—तापोन्मेषेत्यादि न त इत्यन्तम् । हे! सीते! अहं युधि तापस्य उन्मेषेण उद्गमेन विवर्जितः परित्यक्तः अपरिखिन्न इत्यर्थः । मितमोजो येषां ते मितौजस्काः दुर्बला इत्यर्थः । तेषां आभिमुख्यमतीत्य गच्छतीति मितौजस्काभिमुख्यातिगः अभिमुखागतानपि दुर्बलाननादृत्यान्यतोगामीत्यर्थः । सादिताः संहृता दुर्जयाः जेतुमशक्याः प्रतिरथाः प्रतिरथिकाः येन तथोक्तः । कृत्येषु कर्तव्येषु विषये अविमूढः पटुः आशयो यस्य तथोक्तः कार्येष्वप्रमत्त इत्यर्थः । स्थाने स्वाधि-

ष्ठाने आयत्ता अधीना जयेन्दिरा यस्य तथोक्तश्च ते तव श्रोत्रे लग्नः त्वया श्रुत इत्यर्थः । नास्मि किं? किमिति प्रश्ने । सीता प्रत्याह—प्रागित्यादि मुहुरित्यन्तम् । अरे ! तुच्छ ! त्वं प्रागेव पुरैव प्रसङ्गतः प्रसङ्गेन । सार्वविभक्तिकस्तसिः । कुतश्चित्प्रसक्तिवशादित्यर्थः । मुहुः इह मदीय इत्यर्थः । श्रोत्रे लग्नोसि पुरैवासकृन्मया श्रुतोसीत्यर्थः । प्रतिवचननिगूढार्थस्तु—अरे ! त्वं प्रागेव प्रथमत एव स्वगुणप्रतिपादकविशेषणपदाक्षरेभ्यस्सर्वेभ्योऽप्यादित एवेत्यर्थः । प्रेण प्र इत्याकारकवर्णेन संगतः सम्बद्धः । प्रसमुपसर्गद्वयपूर्वकाद्गमेः कर्तरि क्तः । इह श्रोत्रे मुहुः लग्नोसि । एवं च—"त्वं युधि प्रतापोन्मेषविवर्जितः प्रमितौजस्काभिमुख्यातिगः प्रसादितदुर्जयप्रतिरथः प्रकृत्या विमूढाशयः प्रस्थानायत्तजयेन्दिरश्च श्रुतोसि" इत्यर्थः । प्रतापस्य उन्मेषेण अभिव्यक्त्या विवर्जितः निष्प्रताप इत्यर्थः । प्रमितं सुज्ञातं प्रसिद्धमिति यावत्—ओजो येषां तेषामाभिमुख्यमतीत्य गच्छतीति प्रमितौजस्काभिमुख्यातिगः हन्युरेव मामिति भयादिति भावः । प्रसादिताः प्रसादवन्तः कृताः प्रणामादिभिरिति भावः । प्रसादवच्छब्दात्तत्करोतीत्यर्थकण्यन्तात्कर्मणि क्तः । णाविष्ठवद्भावेन 'विन्मतोर्लुक्' इति लुक् । दुर्जयाः प्रतिरथाः येन तथोक्तः । प्रकृत्या स्वभावेन विमूढः आशयः यस्य तथोक्तः मन्दबुद्धिरित्यर्थः । प्रस्थाने गमने आयत्ता व्यग्रा जयेन्दिरा जयाभिमानिनी श्रीः यस्मात्तथोक्तः । 'प्रस्थानं गमनं गमः' इत्यमरः । अधिदत्ताक्षरमिदं चित्रम्—

कस्मिंश्चिदधिके वर्णे दत्तेऽर्थो यत्र भिद्यते ।
अधिदत्ताक्षरं नाम चित्रं तदिति बुद्ध्यताम् ॥

इति तल्लक्षणात् । वृत्तं पूर्ववत् ॥ २६ ॥

**सदायत्तं सत्याविकलमपि मां विद्ध्यवनिजे सुधेत्येव ग्राह्या त्वदनुनयनोक्तिर्मम न किम् । सुखाधिक्यं रामादपि मयि विमूढा अपि विदन्त्यसम्बद्धं मे न श्रुतिमधम तेऽभ्येति वचनम् ॥२७॥**

सदिति ॥ रावणस्सीतामाह—सदायत्तमित्यादि विदन्तीत्यन्तम् । अवनिजे! जानकि! मां सतां साधूनां आयत्तमधीनं विधेयमित्यर्थः । सत्येन मनोवाक्कर्मस्वभिन्नवृत्तित्वरूपेण सत्यव्रतेन अविकलमपि अरहितं च विद्धि जानीहि । मम सम्बन्धिनी तव । कर्मणि षष्ठी । अनुनयनस्य उपलालनस्य । तादर्थ्ये षष्ठी । उक्तिस्सुधेत्येव अमृतमित्येव मत्वेति शेषः । ग्राह्या आदरणीया न किम्? अमृतायितमेव त्वामनुनेतुं मया प्रयुक्तं वचनमित्यर्थः । ईदृशेन वचनेनोपलाल्यमानाऽपि मयि नानुरज्यसे इत्यहो ते मौर्ख्यमिति भावः । रामादपि । विभागनिर्देशार्था पञ्चमीयम् । मयि विद्यमानमिति शेषः । मत्तो जायमानमित्यर्थः । सुखानां आधिक्यं बाहुल्यं विमूढा अपि विदन्ति किं पुनः प्राज्ञा इति वाक्यशेषः । त्वं तु न जानासीत्यहो महदाश्चर्यं ममेति भावः ।

सीता प्रत्याह—असम्बद्धमित्यादि वचनमित्यन्तम् । रे! अधम! असम्बद्धं प्रथमवाक्यस्य द्वितीयवाक्येन तयोस्तृतीयवाक्येन च मिथोऽर्थतस्सम्बन्धरहितमित्यर्थः । ते वचनं मे श्रुतिं नाभ्येति मया न श्रूयत इत्यर्थः । एतेनापहासानादरौ द्योत्येते । प्रतिवचननिगूढार्थस्तु—अधम! रे! नीच! ते वचनं सदायत्तमित्यादि प्रागुक्तं नास्ति सो यस्मिन् तत् असं सकाररहितं सदित्यर्थः। मेन मकारेण बद्धं योजितं सत् सकारस्थानापन्नमकारं सदित्यर्थः। श्रुतिं ममेत्यर्थात्सिद्ध्यति । अभ्येति श्राव्यतां गच्छतीत्यर्थः। एवञ्च—"मदायत्तं मत्वा विकलमपि मां विद्धयवनिजे मुधैत्यैव ग्राह्या त्वदनुनयनोक्तिर्मम न किं मुखाधिक्यं रामादपि मयि विमूढा अपि विदन्ति" इत्येव त्वयोक्तमहं जानामीत्यर्थः । हे! अवनिजे! मां मदस्य आयत्तम्—'अधीनो निघ्न आयत्तः' इत्यमरः । मत्तमित्यर्थः । मत्वा बुद्ध्या विकलमपि विहीनं च । अपिस्समुच्चये—'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः । विद्धि मम त्वदनुनयनोक्तिः मुधैत्यैव व्यर्थेत्यैव ग्राह्या ज्ञेया न किम्? 'व्यर्थके तु वृथा मुधा' इत्यमरः । रामादपि मयि मुखाधिक्यं वदनबाहुल्यं विमूढा अपि विदन्ति । एकमेव मुखं रामस्य मम तु दश मुखानि सन्तीत्याबालमखिलजना जानन्तीत्यर्थः। तेन ममैवं वाचाटतायां न विस्मयनीयमिति भावः । प्रतिदत्ताक्षरमिदं चित्रम् । शिखरिणीवृत्तम् । लक्षणं तूक्तम् ॥ २७॥

**जनस्यास्य प्रेष्याश्शशिमुखि महाहेतिमुखरा**

**विदध्युर्भर्तुस्ते महति विमुखत्वं बत रणे । निमित्त**
**तत्रास्मिन्कलय मदयोत्कर्षविभवं प्रजल्पारे नक्त-**
**ञ्चर खल न मेऽस्त्यादृतिरिह ॥ २७ ॥**

जनस्येति ॥ रावणस्सीतामाह—जनस्येत्यादि विभवमित्यन्तम् हे! शशिमुखि! अस्य जनस्य ममेत्यर्थः । प्रेष्याः किङ्करा राक्षसा इत्यर्थः । 'नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः' इत्यमरः । महति रणे महद्भिः हेतिभिः अस्त्रैः—'हेतिरस्त्रेऽपि नृस्त्रियोः' इति केशवः । मुखराः शब्दायमानास्सन्तः ते भर्तुः रामस्य विमुखत्वं पराङ्मुखत्वं विदध्युः कुर्युः । मदीयभृत्यजनाकृष्ट-शस्त्रशब्दश्रवणादेव संत्रस्य रामः पलायेतेत्यर्थः । एवं भीरुस्स कथं सह साक्षान्मयैव योत्स्यत इति भावः । बतेति हर्षे । तत्रास्मिन्विषये तदिदंशब्दाभ्यामुभाभ्यामप्येकस्यैव पूर्वोक्तस्य विषयस्य परामर्शः, दृश्यन्ते हि—'सोऽयं मदान्धहृदयो रघुवीर-पत्नीम्' इत्यादय एवं विधाः परश्शताः प्रयोगाः । मम मदीयस्येत्यर्थः । अयोत्कर्षस्य शुभफलावहभाग्यातिशयस्य विभवं समृद्धिमेव निमित्तं हेतुं कलय जानीहि । 'अयश्शुभावहो विधिः' इत्यमरः । एवमनायासेन प्रतिभटापगमादीनि शुभफलान्यावहति मम भाग्यातिशयसमृद्धिरिति जानीहीत्यर्थः । सीता प्रत्याह—प्रजल्पेत्यादि इहेत्यन्तम् । अरे! खल! नक्तञ्चर! प्रजल्प प्रलप मे मम इह त्वदीये प्रलापे आदृतिः आदरः श्रवणेच्छेत्यर्थः ।

न त्वदीयं प्रलपितमहं न श्रोतुमिच्छामीत्यर्थः। एतेनासङ्गतस्तव प्रलाप इति द्योत्यते। प्रतिवचननिगूढार्थस्तु—अरे! खल! नकञ्चर! प्रजल्प इह त्वत्प्रजल्पिते मे म इति यो वर्णोऽस्ति तस्मिन्नावृत्तिः न ममेत्यर्थातिसिद्धिः। एवञ्च—जनस्येत्यादि प्राग्गुक्तं वचनं मवर्णेन वियोज्य "जनस्यास्य प्रेप्याश्शशिमुखि हाहेति मुखरा विदध्युर्भर्तुस्ते हतिविमुखत्वं बत रणे निमित्तं तत्रास्मिन्कलय दयोत्कर्षविभवम्" इति वदेत्यर्थः। हे! शशिमुखि! अस्य जनस्य प्रेप्याः रणे हाहा इति मुखराः शोकोद्रेकावबोधकहाहाकारं कुर्वाणास्सन्तः ते भर्तुः हतिविमुखत्वं हन्तुमनुत्साहमित्यर्थः। विदध्युः बतेत्याश्चर्ये। राक्षसान् हन्तुमुद्यतस्यापि रामस्य तेषां हनने पराङ्मुखत्वं भवेदित्याश्चर्यम्। तत्र तस्मिन्विषये रामसम्बन्धिनि राक्षसकर्मकहननविमुखत्व इत्यर्थः। अस्मिन् त्वद्भर्तरि विद्यमानमिति शेषः। दयोत्कर्षविभवं कृपातिशयसमृद्धिमेव निमित्तं कारणं कलय विद्धि 'रामोऽतीव दयालुत्वाद्धाहेति शोचतो राक्षसान्युधि न हन्यात्' इति जानीहीत्यर्थः। च्यावितक्षरमिदं चित्रम्। वृत्तं प्राग्वत्॥ २८॥

**प्रलापरचितोद्यमः किमहमस्मि काकुत्स्थवत्**
**स किं स्वजनपालनोद्यमधुरंधरोऽहं यथा। ममेव**
**ननु तस्य किं जनकजे महालङ्कताऽस्त्यलातघ-**
**टितेव ते खल विभाति वाग्दारुणा॥ २९॥**

प्रलपेति ॥ रावणसीतामाह—प्रलपेत्याद्यस्तीत्यन्तम् । ननु जनकजे! अहं काकुत्स्थेन तुल्यं काकुत्स्थवत् 'तेन तुल्यम्' इति वतिः । राम इवेत्यर्थः । प्रलपे अनर्थके वचसि परिदेवन इत्यर्थः । रचितः उद्यमः व्यवसायो येन तथोक्तः प्रलपैकव्यापृत इत्यर्थः । अस्मि किं? स रामः अहंयथा अहमिव 'इववद्वायथाशब्दौ' इत्याचार्यदण्डी । 'ववा यथा तथैवैवं साम्ये' इत्यमरसिंहश्च । स्वजनानां बन्धूनां पालनस्य उद्यमे धुरंधरः किं? ममेव तस्य रामस्य महती लङ्का लङ्कापुरी यस्य तस्य भावः महालङ्कता अस्ति किं? । सीता प्रत्याह—अलातेत्यादि दारुणेत्यन्तम् । रे! खल! दारुणा क्रूरा ते वाक् अलातैः अङ्गारैः घटितेव गुम्भितेवेत्युत्प्रेक्षा विभाति । 'अङ्गारोऽलातमुल्मुकम्' इत्यमरः । कर्णौ दहतीत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! खल! दारुणा ते वाक् नास्ति लः लकारः यस्यां सा अला लकाररहिता, तेन घटिता तघटिता तकारेण योजिता च सतीत्यर्थः । लकारस्थानापन्नतकारा सतीति यावत् । विभाति शोभते । इवशब्दोऽत्र वाक्यालङ्कारे—'इवेतीषदर्थोपमोत्प्रेक्षावाक्यालङ्कारेषु' इति गणव्याख्यानम् ॥ एवञ्च—प्रलपेत्यादि त्वयोक्ता वाक्, "प्रतापरचितोद्यमः किमहमस्मि काकुत्स्थवत्स किं स्वजनपातनोद्यमधुरंधरोऽहं यथा ममेव ननु तस्य किं जनकजे महातङ्कताऽस्ति" इत्युक्ता चेच्छोभत इत्यर्थः । ननु जनकजे! अहं काकुत्स्थवत् प्रतापेन रचितः उद्यमः येन तथो-

क्तः अस्मि किम्? केवलं मायाविनो मम प्रतापशालिना श्री-रामेण सादृश्यं घटेते किमित्यर्थः । स रामः अहं यथा स्वजनानां पातने विनाशने य उद्यमः तस्मिन्धुरंधरः किम्? रामो मद्वत्स्वजनविनाशकदुर्व्यापारनिरतः किमित्यर्थः । तस्य रामस्य ममेव महान् आतङ्कः विपद्भयं यस्य तस्य भावः महातङ्कता अस्ति किम्? रामो नित्यमहमिव विपदापत्तिशङ्कया बिभेति किमित्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् । पृथ्वीवृत्तम्—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ २९ ॥

**लाभात्ते परमामवैमि नियतं सीते ममेमां दशां**
**तस्मादेव शुभश्रियो मम गृहे पूर्णीभवन्त्यन्वहम् ।**
**लङ्काश्रीस्सकला त्वया ननु मदालम्बादियं पाल्य-**
**तां पञ्चत्वं समुपागतं वचनतस्ते वेद्मि रक्षोऽधम ॥**

लाभादिति ॥ रावणस्सीतामाह—लाभादित्यादि पाल्यतामित्यन्तम् । ननु सीते! ते तव । कर्मणि षष्ठी । लाभाद्धेतोः मम इमां वर्तमानामित्यर्थः । दशां ज्योतिश्शास्त्रप्रसिद्धामुडुदशां नियतं निश्चयेनेत्यर्थः परमां सर्वोत्कृष्टां अवैमि जानामि । जातकस्य लोकोत्तरस्त्रीरत्नप्रभृत्युत्तमफलप्रापिकायास्सुस्थितशुक्रादिशुभग्रहमहादशाया एव परमतया वृद्धपराशरादिभिरुक्तत्वादिति भावः । तस्मादेव त्वल्लाभादेव मम गृहे शुभश्रियः शुभसम्पदः अन्वहं अहन्यहनि । यथार्थे वीप्सायामव्ययीभावः । 'अनश्च' इति

समासान्तष्टच् । पूर्णीभवन्ति मदालम्बात् ममाश्रयणात् त्वर इयमित्यङ्गुलिभ्रमणेन निर्देशः । सकला समग्रा लङ्काश्रीः लङ्का राज्यसम्पदित्यर्थः । पाल्यतां भुज्यतां मामाश्रित्य यथासुखमिम समृद्धां राज्यसम्पदमुपभुङ्क्ष्वेत्यर्थः । एवमेवोक्तं तेन सीतां प्रति श्रीरामायणे—

लोकेभ्यो यानि रत्नानि सम्प्रमथ्याहृतानि वै ।
तानि मे भीरु सर्वाणि राज्यं चैतदहं च ते ॥
पिब विहर रमस्व भुङ्क्ष्व भोगान्
धननिचयं प्रदिशामि मेदिनीं च ॥

इत्यादिना ॥ सीता प्रत्याह—रे! रक्षोऽधम! ते तव वचनतः लाभादित्यारभ्योक्तेन वचनेनेत्यर्थः । आसन्नमरणज्ञाने करणत्वात् 'कर्तृकरणयोस्तृतीया' इति करणे तृतीया । तृतीयान्तादाद्यादित्वात्तसिप्रत्ययः । पञ्चत्वं मरणं—'स्यात्पञ्चता कालधर्मः' इत्यमरः । समुपागतं समुपस्थितं वेद्मि, आसन्नमेव ते मरणं जानामि । यदेवमवाच्यं प्रलपसीत्यर्थः—

अकार्यकरणे शश्वदवाच्यवचनेऽपि च ।
आसन्नस्सर्वथा मृत्युः प्रवर्तयति पूरुषान् ॥

इति वचनादिति भावः । प्रतिवचननिगूढार्थस्तु—रे! रक्षोऽधम! ते तव वचनतः वचने । आद्यादित्वात्सप्तम्यन्तात्तसिः । लाभात्ते परमामित्यादि पाल्यतामित्यन्ते पं पकारं चत्वं चकारत्वं समुपागतं

सम्प्राप्तवन्तं वेद्मि ॥ एवं च—"लाभात्ते चरमामवैमि नियतं सीते ममेमां दशां तस्मादेव शुभश्रियो मम गृहे चूर्णीभवन्त्यन्वहम् । लङ्काश्रीस्सकला त्वया ननु मदालम्बादियं चाल्यताम्' इत्येव त्वमवादीरिति वेद्मीत्यर्थः । ननु सीते! ते लाभात् मम इमां दशां नियतं चरमां अन्त्याम् । मारकग्रहनेतृकामित्यर्थः । अवैमि त्वामपहृतवतो मम रामेण निधनस्यावश्यकत्वादिति भावः, तस्मादेव ममासन्नमरणत्वादेवेत्यर्थः । मम गृहे शुभश्रियः अन्वहं चूर्णीभवन्ति । दिनेदिने शुभलक्षणान्यवसीदन्तीत्यर्थः । त्वया सकला इयं लङ्काश्रीः मत् मद्रूपात् आलम्बात् अधिष्ठानात् चाल्यतां अपसार्यतां अन्यथाक्रियतामित्यर्थः । अत्र चलेरन्यथाकरणार्थत्वेनाकम्पनार्थत्वादमित्त्वं बोध्यम् । प्रतिदत्ताक्षरमिदं चित्रम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तूक्तम् ॥ ३० ॥

**आतङ्कोदयदाहकैरतितरां मैथिल्यनेकैर्निजैर्व्यापारैर्निहतापदस्मि न कुतोऽप्यालोकयाम्याहतिम् ।**
**हातुं मृत्युवशत्वमेव कृतसङ्कल्पोस्मि वीक्षस्व मां किं रे हेयमनाकलय्य कुरुषे निर्लज्जमात्मस्तवम् ॥**

आतङ्केति ॥ रावणस्सीतामाह—आतङ्केत्यादि मामित्यन्तम् । हे! मैथिलि! अहं अतितरामत्यन्तम् । आतङ्कस्य भयस्य शत्रुजनाभ्यवस्कन्दनादिसम्भावनामूलकस्येति भावः । य उदयस्समुद्गमः तस्य दाहकैः विध्वंसकैरित्यर्थः । निजैः अनेकैः व्यापारैः

करणैः दुर्गरचनादिभिरिति भावः । निहता नाशिता आपत् सैन्यक्षयादिः येन तथोक्तोऽस्मि कुतोऽपि कस्माच्चिदपि आहतिमुपघातं नालोकयामि । मृत्युवशत्वमेव मरणमेव हातुं त्यक्तुं अमर्त्य एव भवितुमित्यर्थः । कृतः सङ्कल्पः येन तथोक्तोऽस्मि मां वीक्षस्व ममैवं प्रभावतां सम्यगाकलयेत्यर्थः । सीता प्रत्याह—किमित्यादि स्तवमित्यन्तम् । रे! नीच! हेयं दोषं अनाकलय्य अबुद्ध्वा आत्मस्तवदोषमविगणय्येत्यर्थः । निर्लज्जं निस्त्रपं यथातथा आत्मस्तवं किं कुरुषे? मैवं वृथाऽऽत्मानं स्तोष्ठा इत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! नीच! हे हकारस्थाने यं यकारं अनाकलय्य असंयोज्य निर्लज्जं यथातथा आत्मस्तवं किं कुरुषे? हकारस्थाने यकारं संयोज्य—"आतङ्कोदयदायकैरतितरां मैथिल्यनेकैर्निजैर्व्यापारैर्नियतापदस्मि न कुतोऽप्यालोकयाम्यायतिं यातुं मृत्युवशत्वमेव कृतसङ्कल्पोऽस्मि वीक्षस्व माम्" इत्येव वक्तुमर्हसीत्यर्थः । हे! मैथिलि! अहं अतितरां आतङ्कोदयदायकैः भयोन्मेषजनकैरित्यर्थः । अनेकैः निजैः व्यापारैः परदारापहारादिभिः नियता अव्यभिचरिता आपत् यस्य तथोक्तोऽस्मि कुतोऽपि कस्मादपि 'पञ्चम्यास्तसिल्' इति तसिल् । 'कुतिहोः' इति किमः क्वादेशः । आयतिं उत्तरकालं नालोकयामि क्षिप्रं मरिष्यामीत्यर्थः । 'उत्तरः काल आयतिः' इत्यमरः । मृत्युवशत्वमेव मरणमेव यदत्यन्तानभिमतं जगति तदेवेत्येवशब्दार्थः । यातुं प्राप्तुं कृतः सङ्कल्पो येन तथोक्तोऽस्मि

मां वीक्षस्व एवं दुरात्मा निष्प्रतीकारविपत्कस्स्वविनाशार्थी च कोऽन्योऽस्ति सम्यगाकलयेत्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् । वृत्तं पूर्ववत् ॥ ३१ ॥

**रामो दूषितवान्निजेन जनुषा प्राभाकरीं सन्ततिं । त्यक्त्वा हस्तगतां श्रियं निजयशो दूरीकरोति स्म यत् ॥ तं श्रुत्वा सदयो भवाम्यतितरां मैथिल्यहं त्वत्कृते । पापिन्नेतददम्भवत्तव वचश्शाठ्यं न कैस्सादरम् ॥ ३२ ॥**

राम इति ॥ रावणस्सीतामाह—राम इत्यादि त्वत्कृत इत्यन्तम् । हे मैथिलि! रामः निजेन जनुषा जन्मना प्रभाकरस्येयं प्राभाकरी 'तस्येदम्' इत्यण् । 'टिड्ढाणञ्' इत्यादिना ङीप् । तां सन्ततिं सूर्यवंशं दूषितवान् स्वस्य भीरुत्वदोषेण स्ववंश्यानामभीरूणामपि भीरुत्वप्रवाददोषमापादितवानित्यर्थः । तत्र गमकं हेतुमाह—त्यक्त्वेति । यत् यस्मात्कारणात् हस्तगतां लब्धप्रायामित्यर्थः । श्रियं राज्यलक्ष्मीं त्यक्त्वा दशरथो भरतो वा मां निगृह्णीयादिति भयेनेति भावः । निजयशः क्षत्रियस्यात्मनोऽवश्यमेष्टव्यामपि शौर्यधैर्यप्रथामयीं कीर्तिमित्यर्थः । दूरीकरोति स्म अनादृतवानित्यर्थः । 'लट् स्मे' इति भूते लट् । अहं तं श्रुत्वा तस्यैवंवृत्तिमाकर्ण्येत्यर्थः । त्वत्कृते त्वदर्थं 'अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ' इति कोशः । अ-

तितरां सदयः दयावान् भवामि तं हन्तुमुद्यमतः परावृत्तोऽस्मीत्यर्थः । सीता प्रत्याह—पापिन्नित्यादि सादरमित्यन्तम् । रे! पापिन्! दम्भः कपटोऽस्मिन्नस्तीति दम्भवत् तन्न भवतीत्यदम्भवत् निष्कपटमित्यर्थः । ते तव एतत् प्रागुक्तं वचः कैः जनैः सादरं यथातथा न श्राव्यमिति सोल्लुण्ठनम् । दम्भमयत्वात्त्वत्प्रलपितमिदमनादरणीयमेवेत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! पापिन्! एतत् 'रामो दूषितवान्' इत्यादि ते वचः नास्ति दो दकारो यस्मिन् तत् अदं दकाररहितं सत् भो भकारोऽस्मिन्नस्तीति भवत् भकारसहितं सत् दकारस्थानापन्नभकारं सदित्यर्थः । कैः सादरं यथातथा न श्राव्यम् । एवं च—'रामो भूषितवान्निजेन जनुषा प्राभाकरीं सन्ततिं त्यक्त्वा हस्तगतां श्रियं निजयशो भूरीकरोति स्म यत् । तं श्रुत्वा सभयो भवाम्यतितरां मैथिल्यहं त्वत्कृते' इति त्वयोक्तं चेत्सर्वैरपि सादरं श्राव्यमेवेत्यर्थः । रामः निजेन जनुषा प्राभाकरीं सन्ततिं भूषितवान् सूर्यवंशस्य महतीं ख्यातिं सम्पादितवानित्यर्थः । यत् यस्मात्कारणात् हस्तगतां दुस्त्यजामपीति भावः । श्रियं राज्यलक्ष्मीं त्यक्त्वा पितुस्सत्यसन्धत्वपरिरक्षणार्थमिति भावः । निजं यशः 'रामो विग्रहवान् धर्मः' इत्यादिप्रसिद्ध्या प्रागेव स्वयमुपात्तां कीर्तिमित्यर्थः । भूरीकरोति स्म बहुळीकृतवान् प्रतिज्ञापरिपालनधौरन्धर्यख्यापनेनेति भावः । अहं तं श्रुत्वा तथा निर्भयमरण्यवासमुररीकृतवतस्तस्य धैर्यादिगुणानाकर्ण्येत्यर्थः । त्वत्कृते त्वदपहार-

ामित्तेनेत्यर्थः । अतितरां सभयः भवामि । 'कदाऽऽगत्य मां न्याद्धा' इति बिभेमीत्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् । वृत्तं र्ववत् ॥ ३२ ॥

**सम्प्राप्ते मम राघवेण समरे सीते हरीणां च- [ । रुच्चैश्शोकभयान्विता विकलसत्कीर्तिश्च सद्यो वेत् ॥ स्यादेषा तु विकस्वरास्यनिखिलस्त्रीसन्त- र्मत्पुरी । रे पापिन् कलये न सङ्गतमिदं सर्वं द्दुक्तं वचः ॥ ३३ ॥**

**सम्प्राप्त** इति ॥ रावणस्सीतामाह—सम्प्राप्त इत्यादि मत्पु- न्त्यतम् । हे! सीते! मम राघवेण रामेण सह सहशब्द- गाभावेऽपि तदर्थेन योगात् 'विनाऽपि तद्योगं तृतीया' इत्यु- त्वात्तृतीया । समरे सम्प्राप्ते सति हरीणां कपीनां चमूः सद्यः ादि युद्धोपक्रमक्षण एवेत्यर्थः । उच्चैः अधिकाभ्यामित्यर्थः । शो- भयाभ्यां मदीयबाणप्रहारकृताभ्यामिति भावः । अन्विता कलसत्कीर्तिः प्रणष्टसुयशस्का च पलायनाद्युपक्रमेणेति भावः । ेत् सम्भावनायां लिङ् । एषेत्यङ्गुलिभ्रमणेन निर्देशः । मत्पुरी ङ्का तु विकसन्ति ताच्छील्येनेति विकस्वराणि स्वभर्तृजयोदन्त- वणादिति भावः । 'स्थेशभास' इत्यादिना विपूर्वात्कसेर्वरच्प्र- यः । आस्यानि मुखानि यस्याः तथोक्ता निखिलानां स्त्रीणां ततिः सङ्घो यस्यां सा तथोक्ता बहुव्रीहिगर्भो बहुव्रीहिः ात् । **सीता प्रत्याह—र इत्यादि वच इत्यन्तम् । रे!**

पापिन्! इदं सर्वं 'सम्प्राप्ते मम' इत्याद्यखिलं त्वदुक्तं वचः सङ्गतं समञ्जसं न कलये न जानामि असमञ्जसमेव जानामीत्यर्थः बाधितार्थत्वादिति भावः । प्रतिवचननिगूढार्थस्तु—रे! पापिन् इदं सर्वं त्वदुक्तं वचः कस्य कः इत्याकारकस्य वर्णस्य लये अपगमेनेत्यर्थः । सङ्गतं हृदयङ्गमं स्यादिति शेषः ककारवर्णमपहाय योक्तं चेत्सङ्गच्छत इत्यर्थः । एवं च—'सम्प्राप्ते मम राघवेण समरे सीते हरीणां चमूरुच्चैश्शोभयाऽन्विता विलसत्कीर्तिश्च सद्यो भवेत् । स्यादेषा तु विस्वरास्यनिखिलस्त्रीसन्ततिर्मत्पुरी' इति वदेत्यादेशः फलति । हे! सीते! मम राघवेण समरे सम्प्राप्ते सति हरीणां चमूः सद्यः युद्धोपक्रमक्षण एवेत्यर्थः । जयसिद्धेरविलम्बितत्वादिति भावः । उच्चैः महत्येत्यर्थः । शोभया कान्त्या जयलाभप्रहर्षजनितयेति भावः । अन्विता अतएव विलसन्ती कीर्तिर्यस्याः तथोक्ता च भवेत् । एषा मत्पुरी तु—विस्वराणीति बहुव्रीहिः विकृतस्वराणीत्यर्थः । पत्यपत्यभ्रात्राद्यत्ययशोकविलापमयत्वादिति भावः । आस्यानि यस्यास्तथाविधा निखिलानां स्त्रीणां सन्ततिः यस्यां तथोक्ता स्यात् । लङ्कायां सर्वत्र राक्षसीनां 'हा नाथ! हा तनय! हाऽनुज! हाऽग्रज!' इत्यादिपरिदेवनारावः प्रादुर्भवेदित्यर्थः । उक्तमेवेदं सीतया श्रीरामायणे—

नूनं राक्षसकन्यानां रुदन्तीनां गृहेगृहे ।
श्रोष्यामि न चिरादेव दुःखार्तानामिह ध्वनिम् ॥ इति ॥

च्याविताक्षरमिदं चित्रम् । वृत्तं पूर्ववत् ॥ ३३ ॥

**हारौचित्यनिवेदकाखिलगुणस्सीतेऽस्म्यहं पश्य मां सर्गात्यन्तबहिर्भवत्वधिषणापादिस्वरूपोऽस्म्यहम् । स्यां चाहं हननत्यगप्यभिमतिस्ते चेत्तथा रेऽधम । प्राक्संन्यासत एव ते समुचितं वेद्मि स्वरूपं ननु ॥ ३४ ॥**

हारौचित्येति ॥ रावणस्सीतामाह—हरेत्यादि तथेत्यन्तम् । हे! सीते! अहं हाराणां मुक्तावलीनां औचित्यस्य योग्यतायाः वैमल्यरामणीयकादिजनिताया इति भावः । निवेदकाः ज्ञापकाः साधर्म्यादिति भावः । अखिलाः गुणाः सौशील्यादयो यस्य तथोक्तः अस्मि मुक्तावलीरमणीयामलगुणोऽस्मीत्यर्थः । 'हारो मुक्तावली' इत्यमरः । 'उचितं स्यान्मिते योग्ये ज्ञातेऽभ्यस्ते समञ्जसे' इति नानार्थरत्नमाला । मां पश्य अहं सर्गस्य सृष्टेः ब्रह्मनिर्माणस्येत्यर्थः । यदत्यन्तबहिर्भवं अतीवाविषयीभूतं तस्य भावस्तत्त्वं तस्य धिषणां तत्प्रकारिकां बुद्धिं आपादयत्युत्पादयति जनानामिति सर्गात्यन्तबहिर्भवत्वधिषणापादि ब्रह्मणेदं निर्मातुमतीवाशक्यमिति बुद्ध्युत्पादकमित्यर्थः । सर्वातिशायित्वादिति भावः । स्वरूपं यस्य तथोक्तोऽस्मि । नन्वेवं श्लाघ्यगुणोपि त्वं

श्मशानचैत्यप्रतिमो भूषितोपि भयङ्करः ॥

इत्युक्तरीत्या राक्षसतया हिंस्रत्वाद्भयङ्कर एवास्यतो न

मह्यं रोचस इति चेदत्राह—स्यां चेत्यादि । किञ्चे
चार्थः । ते तव तथा अभिमतिश्चेत् हिंस्रत्वं जहिहीत
भिप्रायश्चेदित्यर्थः । अहं हननं हिंसां त्यजतीति हननत्यगपि स
जातिधर्मत्वा द्दुस्त्यजामपि प्राणिहिंसां परित्यजेयमित्यर्थः । सीत
प्रत्याह—र इत्यादि नन्वित्यन्तम् । रेऽधम! प्राक् पुरा मत
पहारावसर इत्यर्थः । संन्यासतः संन्यासेनैव आद्यादित्वात्तृतीय
न्तात्तसिः । यतिवेषपरिग्रहेणैवेत्यर्थः । ते स्वरूपं समुचि
वेद्मि ननु जानामि खलु । सर्वातिशायिस्वरूपं ममेति प्रलपत
त्वया किमिति पुरा स्वरूपं परित्यज्य यतिरूपं स्वीकृतमित्य
धिक्षेपगर्भमवहेलनमेतत् । प्रतिवचननिगूढार्थस्तु—रेऽधम! ते त
स्वरूपं तत्प्रकारबोधकं विशेषणत्रयमित्यर्थः । प्राक् पूर्वभाग
स्वघटकसर्ववर्णेभ्योऽप्यादावित्यर्थः । संन्यासतः समः समित्युपस
र्गस्य अनुस्वारपरकस इत्याकारकवर्णस्य वा न्यासः न्यसनं स
ङ्घटनमिति यावत् । तेनैव । तृतीयान्तात्तसिः । समुचितं योग्य
वेद्मि—ननु । एवं च—'संहारौचित्यनिवेदकाखिलगुणस्सीतेऽस्म्यह
पश्य मां संसर्गात्यन्तबहिर्भवत्वधिषणापादिस्वरूपोऽस्म्यहम् । स्यां
चाहं संहननत्यगप्यभिमतिस्ते चेत्तथा' इत्येव त्वया वक्तुमुचित-
मित्यर्थः । हे! सीते! अहं संहारे विषये औचित्यस्य योग्य-
त्वस्य वध्यत्वस्येति समुदितार्थः । निवेदकाः ज्ञापकाः एवं—दु-
र्गुणोऽयं दुरात्मा केनचिल्लोकरक्षकेण महात्मनाऽवश्यं निहतस्स्या-
दिति ज्ञापयन्त इत्यर्थः । अखिलाः गुणाः परदारापहारादयः

यस्य तथोक्तोऽस्मि । अहं संसर्गे संवाससंभाषणादिसम्बन्धे विषये अत्यन्तबहिर्भवत्वस्य अतिदूरवर्तित्वस्य अत्यन्तानुचितत्वस्येत्यर्थः। धिषणां आपादयतीति तथोक्तं स्वरूपं यस्य तथोक्तोऽस्मि ॥ किंचेति चार्थः । ते तथा अभिमतिश्चेत् अनेन देहत्यागः कर्तव्य इत्यभिप्रायो यदीत्यर्थः. अहं संहननं शरीरं त्यजतीति तथोक्तोऽपि स्याम् । प्राणिसामान्याभिमततया दुस्त्यजमपि शरीरं त्यजेयमित्यर्थः । 'गात्रं वपुस्संहननम्' इत्यमरः ॥ अधिदत्ताक्षमिदं चित्रम्—लक्षणं तूक्तम् ॥ वृत्तं पूर्ववत् ॥ ३४ ॥

**वैदेहि स्वजनाभिवृद्धिकलनव्यासङ्गमग्नोऽस्म्यहं नारीणामनुरागकारणमिदं रूपं प्रपन्नोऽस्म्यहम् ॥ साफल्यं कमनीयता मम पुनर्नेया त्वयैवाधुना वाक्ते मूढ विकासदा यदि हृदि श्लाघ्या तदानीं भवेत् ॥ ३५ ॥**

वैदेहीति ॥ रावणस्सीतामाह—वैदेहीत्याद्यधुनेत्यन्तम् । हे! वैदेहि! अहं स्वजनानां बन्धूनां राक्षसानामित्यर्थः । अभिवृद्धेः कलने सम्पादने यो व्यासङ्गः तस्मिन् मग्नोऽस्मि. बन्धुजनाभ्युच्चयनैकतानोऽस्मीत्यर्थः । अहं नारीणां अनुरागस्य कारणं हेतुभूतं सकलाङ्गनाजनमनोहरमित्यर्थः । इदमिति स्वाभिमुखेन स्वहस्तेन निर्देशः । रूपं चतुर्विधैर्भूषणैरभूषितत्वेऽपि भूषितवदवभासमानमाकारविशेषमित्यर्थः । तदुक्तम्—

आवेध्यारोप्यविक्षेप्यबन्धनीयैरभूषितम् ।
यद्भूषितमिवाभाति तद्रूपमिति कथ्यते ॥ इति ॥

प्रपन्नः प्राप्तवानस्मि अधुना मम कमनीयता पुनः कामनं तु त्वयैव साफल्यं नेया यदि त्वं कामयसे तदैव मम नीयत्वं सफलं स्यान्नान्यथेत्यर्थः । सीता प्रत्याह—वागित्यादि दित्यन्तम् । रे ! मूढ ! ते तव वाक् हृदि श्रोतॄणामिति शे विकासं ददातीति तथोक्ता यदि हृदयोल्लासिनी चेदित्यर्थ तदानीं श्लाघ्या भवेत्. अतथात्वादियमिदानीमश्लाघ्यैवेत्यर्थ प्रतिवचननिगूढार्थस्तु—रे ! मूढ ! ते वाक् विका विगतकक सदा दकारसहिता यदि ककारस्थानापन्नदकारा यदीत्यर्थः । तः हृदि श्लाघ्या हृद्या भवेत्. एवञ्च—"वैदेहि स्वजनाभिवृद्धि नव्यासङ्गमग्नोऽस्म्यहं नारीणामनुरागदारणमिदं रूपं प्रपन्नोऽस्म्यह साफल्यं दमनीयता ममपुनर्नेया त्वयैवाधुना" इत्युक्ता यदि श्ला भवेदित्यर्थः । हे ! वैदेहि ! अहं स्वजनाभिवृद्धेः दलने ख यो व्यासङ्गः तत्र मग्नोऽस्मि कथमन्यथा त्वामपहरेयमिति भा अहं नारीणां अनुरागस्य दारणं विच्छेदकं दशमुखत्वविंशतिः त्वादिना लोकविलक्षणत्वाद्दंष्ट्रावत्त्वादिना भीकरत्वाच्चेति भाव दारयतेर्नन्द्यादित्वात्कर्तरि ल्युप्रत्ययः । इदं रूपं प्रपन्नः अस्मि दमनीयता पुनः दौरात्म्यप्रयुक्तं वधार्हत्वं त्वित्यर्थः । त्वया ३ नैव साफल्यं नेया क्षिप्रमेव मद्वधमभिसन्धत्स्व त्वदभिसन्धिवि म्बादेव मद्वधो विलम्बत इत्यर्थः । प्रतिदत्ताक्षरमिदं चित्र वृत्तं पूर्ववत् ॥ ३९ ॥

**निश्चिन्तस्य बुधैर्विपत्त्युपनतावङ्गारदीप्रौजसो दुस्साधानपि भञ्जनाद्वशयतश्शश्वद्रिपूनाहवे ॥ तु- ल्यो मे किमु भङ्गवानिति सदा रामश्श्रुतो भूसुते श्राव्यं नास्त्यपि बिन्दुमात्रमनृते पापिन्वचस्यत्र ते ॥ ३६ ॥**

निश्चिन्तेति ॥ रावणस्सीतामाह—निश्चिन्तस्येत्यादि भूसुत इत्यन्तम् । हे! भूसुते! सदा भङ्गवान् पराजयवान्—'रणे भङ्गः पराजयः' इत्यमरः । इति श्रुतः प्रसिद्धः रामः बुधैर्दे- वैर्हेतुभिः विपत्तेः विपदः उपनतौ प्राप्तौ विषये निश्चिन्तस्य चिन्तारहितस्य देवेभ्यो मम कदाचिद्विपदुपनमेदित्याशङ्कां त्यक्त- वत इत्यर्थः । ब्रह्मवरप्रभावादिति भावः । अङ्गारवत् दीप्रं ओजो यस्य तथोक्तस्य अलातोज्ज्वलतेजस्कस्येत्यर्थः । अतएव आहवे युद्धे शश्वत् मुहुः भञ्जनात् पराजयप्रापणात् हेतोः दु- स्साधानपि स्वेतरैर्दुर्जयानपि रिपून् वशयतः स्वनिदेशे स्थापयतः मे मम तुल्यः किमु सदृशः किम्? नित्यं पराजयमनुभवतो रामस्योक्तविधस्य मम च सादृश्यं घटते किमित्यर्थः । सीता प्रत्याह—श्राव्यमित्यादि त इत्यन्तम् । रे! पापिन्! अनृते असत्ये ते तव अत्र वचसि निश्चिन्तस्येत्यादिवचने बिन्दुमात्रम- पि ईषदंशोपीत्यर्थः । श्राव्यं श्रोतुमर्हं नास्ति अनृतत्वात्सर्वमप्य- श्राव्यमेव त्वद्वच इत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! पापिन्!

अनृतेऽपि ते अत्र वचसि बिन्दुमात्रं बिन्दुस्थानापन्नवर्णमात्रम् अत्र लक्षणया बिन्दुपदेन बिन्दुस्थानापन्नवर्णो गृह्यते—

चिन्तायाश्च चितायाश्च बिन्दुमात्रादिहान्तरम् ।
चिता दहति निर्जीवं चिन्ता जीवन्तमप्यहो ॥

इत्यादिपुरातनाभ्यर्हितप्रयोगेषु तथा दर्शनात् न हि तत्रानु स्वारस्साक्षादुपलभ्यते परसवर्णेन नकारेण तदपहारात् । श्राव्यं श्रोतुमर्हं नास्ति न भवति । यद्यप्यनृतत्वात्सर्वांशतोऽप्यश्राव्य मेव त्वद्वचस्तथाऽपि 'तुष्यतु दुर्जनः' इति न्यायेन अनुस्वार मात्रमपहायान्यत्सर्वं श्रूयत इत्यर्थः । एवञ्च—'निश्चितस्य बुधै र्विपत्त्युपनतावगारदीप्रौजसो दुस्साधानापि भजनाद्वशयतश्शश्वद्रिपूना हवे तुल्यो मे किमु भगवानिति सदा रामश्श्रुतो भूसुते' इति त्वयोक्तं चेच्छ्रूयत इति फलितम् । हे! भूसुते! सदा भगवा निति—

**एश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः ।**
**ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ॥**

इत्युक्तलक्षणषड्गुणसम्पत्तिमानिति श्रुतः रामः बुधैः ज्ञातृभिः— 'ज्ञातृचान्द्रिसुरा बुधाः' इति क्षीरस्वामी । विपत्त्युपनतौ विषये निश्चितस्य क्षिप्रमयं विपत्स्यत इति विपदुपास्थितिलक्षणज्ञैर्निर्धारित- स्येत्यर्थः । अगारे गृहे दीप्रं ओजो यस्य तथोक्तस्य अन्तः- पुरमात्रवीरस्येत्यर्थः । आहवे दुस्साधानपि रिपून् शश्वत् भज- नात् सेवनात् प्रणमनस्तवनादिरूपात् वशयतः प्रसादयत इत्यर्थः ।

मे तुल्यः किमु जगत्पतेश्श्रीरामस्य कापुरुषस्य मम च कथमिव सादृश्यं घटत इत्यर्थः । च्याविताक्षरमिदं चित्रम् । वृत्तं पूर्ववत् ॥

**भद्रो हेतिविशारदः प्रकृतितस्सर्वक्षपाटावली-**
**भव्यापादनमार्गकृद्भवनसम्प्राप्त्युत्कसर्वोदयः ।**
**वैधात्रान्वयशोभकात्युपचयव्यासक्त इत्यप्यहं**
**क्षोणीनन्दिनि न श्रुतोऽस्मि किमु रे पापिन्भ-**
**वान्न श्रुतः ॥ ३७ ॥**

भद्र इति ॥ रावणस्सीतामाह—भद्र इत्यादि किमित्यन्तम् । अत्रान्त्यविशेषणस्यान्ते श्रूयमाण इतिशब्दस्समुच्चयार्थकापिशब्द-योगमहिम्ना प्रतिविशेषणमभिसम्बध्यते । हे! क्षोणीनन्दिनि! अहं भद्रः मङ्गलात्मा इति, हेतिषु आयुधेषु तत्प्रयोगादिष्वित्य-र्थः । विशारद इति, प्रकृतितः प्रकृत्या । आद्यादित्वात्तृतीया-न्तात्तसिः । सर्वेषां क्षपाटानां रक्षसां आवल्याः भव्यापादनस्य क्षेमसम्पादनस्य मार्गं अन्वेषणम् । मार्गयतेर्भावे घञ् । मनसि विचारामित्यर्थः । करोतीति सर्वक्षपाटावळीभव्यापादनमार्गकृदिति, भवनस्य स्वगृहस्य । कर्मणि षष्ठी । सम्प्राप्तौ उत्कः उत्सुकः सर्वेषामिन्द्रादिलोकपालानामित्यर्थः । उदयः अभ्युदयो यस्य । तथोक्त इति, वैधात्रस्य विधातृसम्बन्धिनः 'तस्येदम्' इत्यण् । अन्वयस्य वंशस्य शोभके प्रकाशके अत्युपचये अत्यन्ताभिवृद्धौ व्यासक्तः विशेषेणासक्तिमान् इत्यपि श्रुतः नास्मि किमु । सीता प्रत्याह—र इत्यादि श्रुत इत्यन्तम् । रे! पापिन्! भवान् त्वं

न श्रुतः त्वामहं न श्रुतवतीत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! पापिन्! त्वमिति शेषः भवान् भवर्णवान् न श्रुतः त्वां भवर्णवद्विशेषणकमहं न श्रुतवतीत्यर्थः । एवञ्च—भवर्णविरहेण 'द्रोहेऽतिविशारदः प्रकृतित इति, सर्वक्षपाटावळीव्यापादनमार्गकृदिति, वनसम्प्राप्त्युत्कसर्वोदय इति, वैधात्रान्वयशोकात्युपचयव्यासक्त इत्यपि त्वं मया श्रुतोसि' इति फलितम् । प्रकृतितस्स्वभावेन राक्षसतयेत्यर्थः । द्रोहे प्राणिहिंसायां अतिविशारदः अत एव सर्वेषां क्षपाटानां आवळ्याः व्यापादने मारणे यो मार्गः हेतुभूतं कार्यमित्यर्थः । त्वदपहारात्मकमिति भावः । तं करोतीति तथोक्तः वनस्य काननस्य सम्प्राप्तौ उत्कः उत्कण्ठितः विनाशोन्मुख इत्यर्थः । सर्वः उदयः यस्य तथोक्तः वैधात्रस्य अन्वयस्य पुलस्त्यादीनां ब्रह्मवंश्यानामित्यर्थः । शोकस्य स्वदौर्जन्यमूलकस्येति भावः । अत्युपचये अत्यन्ताभिवर्धने व्यासक्तः । च्यविताक्षरमिदं चित्रम् । वृत्तं पूर्ववत्॥ ३७ ॥

**स भर्ता ते जानक्युपचितविपत्सर्वसमये**
**समस्ते च स्थाने गुणविदपरिश्लाघितगुणः ।**
**अतः कुर्वे तस्मिन्नपतितृषमाः किं वदसि ते**
**सपापा येऽभिज्ञा इह वचसि कर्णं निदधते ॥**

**स** इति ॥ रावणस्सीतामाह—स इत्यादि तृषमित्यन्तम् । हे! जानकि! स ते भर्ता रामः पतिभक्त्या यस्मिन्ननुरक्ताऽसीति

भावबोधकस्तच्छब्दः सर्वसमये समस्ते स्थाने च सर्वकालदेशाव-च्छेदेनेत्यर्थः । उपचिता प्रवृद्धा विपद्यस्य तथोक्तः । गुणविद्भिः गुणज्ञैः अपरिश्लाविताः गुणाः यस्य तथोक्तः । गुणज्ञाभिमतैर्गुणैर्वर्जित इत्यर्थः । अतः हेतोः एतस्मिन्नामे पतितृषं पतिरित्यनुरागं न कुरु मा कार्षीः । सीता प्रत्याह—आः इत्यादि निदधत इत्यन्तम् । आः इति कोपे—'आस्तु स्यात्कोपपीडयोः' इत्यमरः । किं वदसि! किमित्याक्षेपे मैवं वादीरित्यर्थः। अभिज्ञाः—'अश्राव्यश्रवणं दोषाय' इति जानन्त इत्यर्थः । ये जनाः इह वचसि त्वदुक्ते वचने कर्णं निदधते अभिमुखीकुर्वते इदं वचश्शृण्वन्तीत्यर्थः । ते तेऽपीत्यर्थः । सपापाः पापवन्तः भवन्तीति शेषः । श्रोतृणामपि पापजनकं तव दुर्वचः किं पुनर्वक्तुरेव तवेत्यर्थः । अतिनिगूढः प्रतिवचनार्थस्तु—आः किं वदसीत्येतदभिन्नार्थम् । पस्य पवर्णस्य अपायः अपगमः पापायः पापायेन सह वर्तत इति सपापायं तस्मिन् सपापाये प इत्याकारकवर्णरहिते इत्यर्थः । ते तव इह वचसि स भर्तेत्यादिवचने अभिज्ञाः कर्णं निदधते । एवञ्च—स भर्तेत्यादि वचनं पवर्णेन विना—'स भर्ता ते जानक्युचितवित्सर्वसमये समस्ते च स्थाने गुणविदरिश्लाघितगुणः अतः कुर्वे तस्मिन्नतितृषम्' इत्युक्तं सदभिज्ञैश्श्राव्यं भवतीत्यर्थः । हे! जानकि! स ते भर्ता रामः सर्वसमये समस्ते स्थाने च उचितं वेत्तीति उचितवित् यदा यत्र यत्कर्तव्यं तदभिज्ञ इत्यर्थः । गुणविद्भिः

गुणज्ञैः अरिभिश्शत्रुभिरपीत्यर्थः । किमुतान्यैरिति भावः । श्लाघिताः गुणाः यस्य स तथोक्तः अतः एवङ्गुणशालित्वात् एतस्मिन्रामे अतितृषं अत्यन्तानुरागं कुरु । च्यावितातक्षरमिदं चित्रम् ॥ ३८॥

**आरामस्मृतिजायमानपुलकस्त्वामत्र रुद्ध्वाऽस्म्यहं सीतेऽस्म्यादरवानतीव समरारम्भे खरध्वंसिना ॥ आशान्तप्रथितप्रतापविसरः किञ्चास्मि रक्षोऽधम प्रागाकारपिधानमेव ननु ते व्याख्याति सर्वान्गुणान् ॥ ३९ ॥**

**आरामेति** ॥ रावणस्सीतामाह—आरामेत्यादि किञ्चास्मीत्यन्तम्। हे! सीते! अहं अत्र अशोकवने त्वां रुध्वा आरामस्य उपवनस्य स्मृत्या जायमानाः पुलकाः रोमाञ्चाः यस्य तथोक्तः अस्मि त्वदधिष्ठितमिदमुपवनमपि स्मरतो मम रोमाञ्चास्सञ्जायन्त इत्यर्थः । इयान्मम त्वय्यनुराग इति भावः । 'आरामस्स्यादुपवनम्' इत्यमरः । न च रामस्त्वामितो नीत्वा ममेमं त्वय्यनुरागं विफलयेदित्यातङ्कवानस्मीत्याह—सीतेऽस्मीत्यादि । खरध्वंसिना रामेण सह समरारम्भे युद्धोपक्रमे विषये अतीव आदरवान् अस्मि कदाऽहं मद्बान्धवद्रोहिणं रामं पश्येयं कदा च युध्वा तं हन्यामिति समयप्रतीक्ष एवास्मीत्यर्थः । ननु कथं न बिभेषि खरादीनपि निहतवता रामेण सह योद्धुमिति चेदाह—

आशान्तेत्यादि । किञ्चेत्युक्तगुणसमुच्चये । आशान्तेषु दिगन्तेषु प्रथितः ख्यातः प्रतापस्य विसरो विजृम्भणं यस्य तथोक्तोऽस्मि । नाहं खरादिवत्क्षुद्रः किन्त्वखिललोकविदिततेजा महावीरोऽस्मीत्यर्थः । सीता प्रत्याह—रक्षोऽधमेत्यादि गुणानित्यन्तम् । रे! रक्षोऽधम! प्राक् पुराकृतमित्यर्थः । आकारपिधानमेव यतिवेषेणात्मरूपतिरोधानमेवेत्यर्थः । ते तव सर्वान्गुणान् शौर्यादीन् व्याख्याति ननु स्पष्टं कथयति खल्वित्यर्थः । यदि त्वमक्षुद्रो महावीरस्तर्हि ममापहारसमये कुतश्श्रीरामभयाद्यतिवेषपरिग्रहेणात्मरूपं व्यधाः तन्मृषैव तव शौर्यादयो गुणाः वृथैव त्वं कत्थस इत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! रक्षोऽधम! प्राकासौ आकारश्च प्रागाकारः प्रथमः आ इति वर्णः तस्य पिधानं तिरोधानं वर्जनमित्यर्थः । तदेव विशेषणपदाक्षरेषु प्राथमिकस्य आ इति वर्णस्य परित्याग एवेत्यर्थः । ते सर्वान्गुणान्व्याख्याति ननु । एवञ्च—"रामस्मृतिजायमानपुलकस्त्वामत्र रुद्ध्वाऽस्म्यहं सीतेऽस्मि दरवानतीव समरारम्भे खरध्वंसिना शान्तप्रथितप्रतापविसरः किञ्चास्मि" इत्येव त्वं वक्तुमर्हसीत्यर्थः । हे! सीते! अहं त्वां अत्र लङ्कायां रुद्ध्वा मोहादपहृतामपि त्वां विवेकतो रामाय पुनरसमर्प्यैत्यर्थः । रामस्य स्मृत्या जायमानाः पुलका यस्य तथोक्तः अस्मि । "रामः कदाऽऽगत्य मां हन्याद्वा" इति बिभेमीत्यर्थः । भयेऽपि पुलकोद्गमः प्रसिद्ध एव । ननु वीरस्त्वं कुतो रामाद्बिभेषीत्यत आह—सीतेऽस्मीत्यादि । खरध्वंसिना सह समरारम्भे अ-

तीव दरवान् भयवान् अस्मि । "ख्यातवीर्यं खरं नाम रक्षःप्रमुखं हतवान्रामः कथं मां न हन्यात्" इति बिभेमीत्यर्थः । "दरत्रासौ भीतिर्भीः" इत्यमरः । ननु खरादिभ्योऽपि प्रतापवत्तया प्रथितस्य ते कुतो भयमित्यत आह—शान्तप्रथितप्रतापविसर इति शान्तः विरतः—

गर्ह्यकर्मप्रवृत्तस्य स्वयं तेजो विनश्यति ।

इति न्यायात् परदारचौर्याद्यकार्यप्रवृत्तिवशेन विनष्ट इत्यर्थः । प्रथितस्य दिक्पालाक्रमणादिनेति भावः । प्रतापस्य विसरो यस्य तथोक्तः अस्मि । एवंभूतस्य मे न कथं रामाद्भयमिति भावः । च्याविताक्षरमिदं चित्रम् ॥ ३९ ॥

**ईतित्यड्गिजबन्धुपौरपरिषत्तोष्टूय्यमानोऽस्म्यहं**
**शान्तातङ्कनिमित्तभूतचरितस्सीतेऽस्म्यहं पश्य माम्**
**नित्यं किञ्च धनोपलब्ध्यनुगुणव्यापार एवास्मि रे**
**स्वैरं जल्प मुहुर्निकारविषयाः प्रागेव तेऽमी गुणाः**

ईतीति ॥ रावणस्सीतामाह—ईतीत्यादि एवास्मीत्यन्तम् । हे! सीते! अहं ईतिं त्यजन्तीति ईतित्यजः तेषां निरीतिबाधानां निजानां बन्धूनां पौराणां च परिषदा समाजेन तोष्टूय्यमानः पुनःपुनः स्तूयमानः अस्मि । स्तौतेर्यङन्तात्कर्मणि यकि लटश्शानच् । मम सौराज्येन सुखिता बन्धवः पौराश्च मुहुर्मुहुर्मां स्तुवन्तीत्यर्थः । अहं

शान्तानि विरतानि अप्रवर्तमानानीत्यर्थः । आतङ्कनिमित्तभूतचरितानि भयकारणीभूतव्यापाराः यस्य तथोक्तः अस्मि । दुष्कर्मप्रवृत्तिविरहेण निर्भयमहं तिष्ठामीत्यर्थः । मां पश्य । किञ्च—नित्यमजस्रं धनोपलब्धेः धनप्राप्तेः अनुगुणाः अनुकूलाः व्यापाराः यस्य तथोक्त एव अस्मि । नित्यं धनप्राप्त्यनुकूलेष्वेव व्यापारेषु अहं प्रवृत्त इत्यर्थः । सीता प्रत्यह—र इत्यादि गुणा इत्यन्तम् । रे! नीच! स्वैरं यथेच्छं मुहुः जल्प अमी त्वदुक्ताः ते तव गुणाः प्रागेव पुरैव निकारस्य न्यक्कारस्य विषयाः गोचराः । पूर्वमेव मया श्रुतावधीरितानपि गुणान्निर्लज्जं पुनःपुनः जल्पसि जल्प किं तेन ममेत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! स्वैरं मुहुर्जल्प अमी ते इत्येतदभिन्नार्थं गुणाः तत्प्रतिपादकविशेषणपदानीत्यर्थः । प्रागेव स्वावयवीभूतेभ्योऽक्षरेभ्यः सर्वेभ्योऽप्यादित एव निकारस्य नि इत्यानुपूर्वीकस्य वर्णस्य विषयाः स्थानीभूताः । एवञ्च—"नीतित्यङ्गिजबन्धुपौरपरिषत्तोष्टूय्यमानोऽस्म्यहं निशान्तातङ्कनिमित्तभूलचारितस्सीतेऽस्म्यहं पश्य मां नित्यं किञ्च निधनोपलब्ध्यनुगुणव्यापार एवास्मि" इत्येव त्वया वक्तव्यमित्यर्थः । हे! सीते! अहं नीतित्यजां त्यक्तनीतीनां निजानां बन्धूनां पौराणां च परिषदा तोष्टूय्यमानः अस्मि । ये बन्धवः पौराश्च मां मुहुर्मुहुः स्तुवन्ति ते सर्वेऽपि—

जीवन्ति ये यमाश्रित्य ते स्युस्तस्य हितैषिणः ।

इत्यादिवचनोक्तां नीतिं दूरतः परित्यक्तवन्त इत्यर्थः । कथमन्यथैवं दुर्मार्गप्रवृत्तमपि मामनिवारयन्तः प्रत्युत स्तुयुरिति भावः।

अहं निशान्तस्य अन्तःपुरस्य । मन्दोदर्यादीनामित्यर्थः । आतङ्कर भयस्य । वैधव्यसंभावनाप्रयुक्तस्येति भावः । निमित्तभूतानि चरि तानि यस्य तथोक्तः अस्मि मां पश्य । स्वचरितानां तथात्वे हेतुमाह—नित्यमित्यादि । किञ्च—नित्यमहं निधनस्य मरणस्य उपलब्धेः प्राप्तेः अनुगुणाः व्यापाराः यस्य तथोक्त एव अस्मि अतो युक्त एव ममान्तःपुरस्य वैधव्यसम्भावनातङ्क इति भावः 'मरणं निधनोऽस्त्रियाम्' इत्यमरः । अघिदत्ताक्षरमिदं चित्रम्।

**जयश्रीर्लग्ना मे भुजभुवि सदा राघवलयं**
**निधत्तेऽन्तर्वैदेह्यरिलवनसंप्राप्त्यभिरता**
**न ते प्रीतिर्न स्यान्मयि लसितभावं गत**
**इह त्वदुक्तैषा पापिन्कुफणितिरलाभा-**
**न्वयवती ॥ ४१ ॥**

जयश्रीरिति ॥ रावणस्सीतामाह—जयश्रीरित्यादि इहेत्यन्तम् । हे! वैदेहि! अरीणां लवनस्य छेदनस्य सम्प्राप्तौ उपस्थित्या-मित्यर्थः । अभिरता आसक्ताः । युद्धलाभः कदा स्यात्कदा स्या-दित्यभिलषन्तीत्यर्थः । सदा मे भुजभुवि बाहुप्रदेशे लग्ना वि-श्रान्ता जयश्रीः राघवस्य लयं वधमित्यर्थः । अन्तः मनसी-त्यर्थः । ममेति शेषः । निधत्ते स्थापयति । लीलयैव त्वया रामो निहनिष्यत इति मां प्रत्याययतीत्यर्थः । अतएवेति शेषः । लसितभावं उल्लासं गते प्राप्ते इह मयि ते तव

प्रीतिः अनुरागः न स्यादिति न किन्तु स्यादेवेत्यर्थः । सीता प्रत्याह—त्वदित्यादि अन्वयवतीत्यन्तम् । रे! पापिन्! त्वदुक्ता एषा जयश्रीर्लग्नेत्यादिः कुफणितिः असदर्थप्रतिपादकत्वात्कुत्सितोक्तिः लभेन फलेन अन्वयवती सम्बद्धा न भवतीत्यलाभान्वयवती निष्फलेत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! पापिन्! त्वदुक्ता एषा कुफणितिः नास्ति लः लकारः यस्यां सा अला लकाररहिता भस्य भकारस्य अन्वयस्सम्बन्धः अस्यामस्तीति भान्वयवती भकारान्विता लकारस्थानापन्नभकारेत्यर्थः । इति जानामीति शेषः । एवं च—"जयश्रीर्भग्ना मे भुजभुवि सदा राघवभयं निधत्तेऽन्तर्वै देह्यरिभवनसम्प्राप्त्यभिरता। न ते प्रीतिर्न स्यान्मयि भसितभावं गत इह" इत्येव त्वयोक्तं जानामीत्यर्थः। हे! वैदेहि! मे भुजभुवि भग्ना भङ्गं प्राप्ता अत एव अरीणां भवनस्य। कर्मणि षष्ठी। सम्प्राप्तौ अभिरता जयश्रीः सदा राघवात् भयं अन्तः मनसि। ममेति शेषः। निधत्ते जयश्रिया परित्यक्तोऽहं कदाऽऽगत्य रघुवीरो मां निहन्यादिति मनस्यजस्रं बिभेमीत्यर्थः । इह मयि भसितभावं भस्मत्वं गते सति ते प्रीतिः न स्यादिति न किन्तु स्यादेवेत्यर्थः । "भूतिर्भसितभस्मनी" इत्यमरः। प्रतिदत्ताक्षरमिदं चित्रम्। शिखरिणीवृत्तम्॥४१

**मारास्योन्नतिभङ्गदायि सुदृशश्श्रुत्वा स्वरूपं द्रुतं वाञ्छन्त्यस्य जनस्य मण्डन-**

**कथां कर्तुं स्वकर्णोत्सवम् ॥ अस्याजि-**
**ष्वसुरक्षणं परमया शक्त्यैव नैवान्यथ**
**मन्दीकुर्वयि मूढ किं बहु मुहुस्संजल्प-**
**सीत्थं वृथा ॥ ४२ ॥**

मारेति ॥ रावणस्सीतामाह—मारास्येत्याद्यन्यथेत्यन्तम् । हे! सीते! सुदृशः स्त्रियः मारस्य मन्मथस्य आस्योन्नतेः मुखौन्न-त्यस्य सौन्दर्यगर्वप्रयुक्तस्येति भावः । भङ्गं ददातीति तथोक्तम्। तस्मादपि सुन्दरत्वादिति भावः। अस्य जनस्य ममेत्यर्थः। स्वरूपं श्रुत्वा द्रुतं अविलम्बितं यथायथा अस्य जनस्येत्यत्राप्यनुषज्यते। मण्डनकथां अलङ्कारवर्णनमित्यर्थः । स्वेषां कर्णयोः उत्सवं कर्तुं वाञ्छन्ति। एवमतिसुन्दरोऽयमलङ्कृतोऽपि चेत्कथं भासेत तच्छ्रोत-व्यमिति सकौतुकमतितरां त्वरन्त इत्यर्थः । एवं स्वस्य सौन्दर्या-तिशयमुक्त्वा शौर्यातिशयं कथयति—अस्याजिष्वित्यादिना। आजि-षु युद्धेषु। अस्य ममेत्यर्थः । असुरक्षणं प्राणरक्षा । शत्रुभ्य आ-त्मपरित्राणमित्यर्थः । परमया सर्वोत्कृष्टया शक्त्यैव पराक्रमेणैव। भवतीति शेषः । "शक्तिः पराक्रमप्राणौ" इत्यमरः । अन्यथा सैन्यसाहाय्यादिनेत्यर्थः। नैव भवति असहायशूरोऽहमित्यर्थः। सी-ता प्रत्याह—मन्दीकुर्वित्यादि वृथेत्यन्तम् । अयि! मूढ! इत्थं मुहुः बहु यथा तथा वृथा किं संजल्पसि मन्दीकुरु अल्पीकुरु सञ्जल्पितमित्येवार्थिकं कर्म । प्रतिवचननिगूढार्थस्तु—मं मकारं दीकुरु

द्दकारीकुरु अन्यत्सर्वमन्वयतोऽर्थतश्चाभिन्नम् । एवञ्च—"दारास्योन्नतिभङ्गदायि सुदृशश्श्रुत्वा स्वरूपं द्रुतं वाञ्छन्त्यस्य जनस्य दण्डनकथां कर्तुं स्वकर्णोत्सवम् । अस्याजिष्वसुरक्षणं परदयाशक्तचैव नैवान्यथा" इति वदेत्यर्थः । सुदृशः विद्वांसः गुणदोषविवेक्तारस्सुजना इत्यर्थः । 'सुदृग्विदुषि वाच्यवत्" इत्यजयः । दाराणां मदीयानां आस्योन्नतेः । सौभाग्यगर्वप्रयुक्ताया इति भावः । भङ्गदायि अस्य जनस्य स्वरूपं स्वभावं—"स्वरूपं च स्वभावश्च" इत्यमरः । स्वाभाविकं दुश्शीलमित्यर्थः । परदारापहारादिकमिति भावः । श्रुत्वा द्रुतं अस्य जनस्य दण्डनकथां संहारकथामित्यर्थः । स्वेषां कर्णयोरुत्सवं कर्तुं वाञ्छन्ति । मम दुश्चरितमाकर्णयन्तस्सुजना अस्य दुरात्मनः कथं केन कदा वधः क्रियेत कदा वयमिदं श्रुत्वा आनन्दमनुभवेमेति त्वरन्त इत्यर्थः। आजिषु अस्येति स्वनिर्देशः । असुरक्षणं परेषां शत्रूणां—"परोऽरिपरमात्मनोः" इति विश्वः । दयाशक्त्यैव कृपामहिम्नैवेत्यर्थः । भवतीति शेषः । अन्यथा स्वपराक्रमादिनेत्यर्थः । नैव न भवत्येव । प्रतियुद्धमरिभिर्दयालुभिः परित्यक्त एवाहं जीवामीत्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् ॥ ४२ ॥

**अहं नापत्त्रासक्षुभितहृदयोऽस्मि क्षितिसुते ।**
**कथं श्रीरेवं मय्यनुभवति लोलत्वमयते ॥**
**वृणीष्वैव त्वं मां यदि नवरसज्ञेऽस्त्यभिरुचिः ।**
**दुरात्मन्वागेषा ननु तव विनाशोदयवती ॥**

अहमिति ॥ रावणस्सीतामाह—अहमित्याद्यभिरुचिरित्यन्तम्
हे क्षितिसुते! अहं आपद्भ्यः विपत्तिभ्यः त्रासेन क्षुभितं ः
म्पितं हृदयं यस्य तथोक्तः नास्मि। विपदुपनिपातशङ्कैव मम
रतोऽपास्तेत्यर्थः । दिक्पालादीनामपि स्वाधीनत्वादिति भावः
मयि एवं अनेन प्रकारेण। सकललोकाधीशतयेत्यर्थः । अनुभ
ति उपभुञ्जाने सति । श्रियमित्यर्थाद्गम्यते । श्रीः सम्पत् ः
थं लोलत्वं चञ्चलत्वं अयते प्राप्नोति। सर्वलोकनियामकतया ि
ष्कण्टकस्य मम सम्पदपगमः कथं सम्भाव्यत इत्यर्थः । नः
अपूर्वः स चासौ रसज्ञश्च तस्मिन्। पुंसीति शेषः । अभिरुचि
अस्ति यदि। तवेति शेषः । त्वं मामेव वृणीष्व भर्तृभावेन भज
न कोऽप्यहमिवापूर्वो रसज्ञ इत्यर्थः । सीता प्रत्याह—दुरात्म
न्नित्याद्युदयवतीत्यन्तम् । रे! दुरात्मन्! एषा पूर्वोक्ता वाः
तव विनाशेन उदयवती ननु फलवती न किं—'उदयस्तून्नं
फले' इति विश्वः । तव विनाशमन्तरा नान्यद्वाचोऽस्याः फः
पश्यामीत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! दुरात्मन्! एषा तः
वाक् अहमित्यादिः विना विगतनकारा सती, शस्य शकारस्
उदयः उद्भवः अस्यामस्तीति शोदयवती ननु। नकारस्थानापन्न
शकारा खल्वित्यर्थः । इति जानामीति शेषः । एवञ्च—'अः
शापत्त्रासक्षुभितहृदयोऽस्मि क्षितिसुते कथं श्रीरेवं मय्यशुभवति
लोलत्वमयते । वृणीष्वैव त्वं मां यदि शवरसज्ञेऽस्त्यभिरुचिः
इत्येव त्वयोक्तं जानामीत्यर्थः । हे! क्षितिसुते! अहं शापेभ्य

वेदवतीनन्दिकेश्वरानरण्यादिभिर्मया प्रधर्षितैर्दत्तेभ्य इति भावः । स तु विस्तरः श्रीमत्युत्तररामायणे द्रष्टव्यः । त्रासेन 'विपद्भूपतः कदा परिणमेद्' इति भयेन क्षुभितं हृदयं यस्य तथोक्तः अस्मि । शापत्त्रासेत्यत्र 'संहितायाम्' 'अनचि च' इति तकारस्य द्वित्वं बोध्यम् । ननु—'श्रीमतामापदः कुतः' इति न्यायेन नैव श्रीमन्तमापत्प्राप्नोति प्राप्ताऽप्यपैति श्रीमहिम्ना तत्कुतो बिभेषीत्यत आह—कथमित्यादि । एवं अनेन प्रकारेण प्रत्यक्षतस्त्वयैवेदानीमनुभूयमानेनापहारोपरोधकदर्थनादिरूपेणेति भावः । अशुभवति अमङ्गलाचारवति मयि श्रीः लक्ष्मीः कथं लोलत्वं साभिलाषत्वं अयते । 'लोलश्चलसतृष्णयोः' इत्यमरः । कथञ्चिदुपलब्धाऽप्यपसरत्येवेत्यर्थः । एवं श्रिया जिहासितोऽपि त्वया पुनर्वरणीय एवेति कथनाभासेन दूरतः परिहरणीय एवाहमित्याह—वृणीष्वेत्यादिना । शबरसङ्गे कुणपसारङ्गे । पुंसीति शेषः । अभिरुचिः अस्ति यदि । तवेति शेषः । त्वं मामेव वृणीष्व तादृशेष्वप्यहमेवाग्रगण्य इति भावः । प्रतिदत्ताक्षरं चित्रम् ॥४३॥

**न जात्वापद्भीर्मे दशरथकुमारात् क्षितिसुते ।**
**नराशास्सर्वे मय्यभिरतिजुषोऽत्यन्तसुहृदः ॥**
**अनष्टश्रीर्भद्रत्क इह नयतोऽपेतविपदाः ।**
**खलु त्वद्वक्त्रे यत्प्रलपनमनन्नयास्पदमिदम् ॥४४**

नैति ॥ रावणस्सीतामाह—न जात्वित्यादि विपदित्यन्तम् । हे! क्षितिसुते! मे मम दशरथकुमारात् रामाद्धेतोः आपद्भीः विपद्भयं 'रामो मां हन्यात्' इति भयमित्यर्थः । जातु कदाचन न नास्ति । सर्वे नराशाः राक्षसाः अत्यन्तसुहृदस्सन्तः अतीव हितचिन्तकास्सन्त इत्यर्थः । मयि विषये अभिरतिमनुरागं जुषन्ते सेवन्त इति तथोक्ताः । तैस्ससहायस्य मम कुतो विपद्भयमिति भावः । अस्तु किं तेनेत्यत आह—अनष्टेत्यादि । इह लोके मद्वत् मया तुल्यं अहमिवेत्यर्थः । अनष्टा श्रीः यस्य तथोक्तः स्थिरसम्पदित्यर्थः । किञ्चेति शेषः । नयतः नयेन हेतुना । तृतीयान्तात्तसिः । नीतिशास्त्रानुवर्तनेनेत्यर्थः । अपेता अपास्ता विपद्यस्मात्तथोक्तः कः । अस्तीति शेषः । सीता प्रत्याह—आः इत्यादि इदमित्यन्तम् । आः इति कोपे । रे! खल! त्वद्वक्त्रे तव मुखे यत्प्रलपनं अनर्थकं वचनं अस्तीति शेषः । इदं प्रलपनमित्यर्थः । न विद्यते अन्यत् आस्पदं स्थानं यस्य तत्तथोक्तं त्वन्मुखैकास्पदं 'संहितायाम्' 'अनचि च' इति द्वितीयनकारस्य वैकल्पिकं द्वित्वम् । त्वमिव न कोऽप्येवमप्रयोजकं साहङ्कारवचनं जल्पतीत्यर्थः । प्रतिवचननिगूढार्थस्तु—आः! खल! त्वद्वक्त्रे यत्प्रलपनं अस्ति इदं अनं नवर्णरहितं किन्तु नेः निवर्णस्य आस्पदं स्थानभूतं इति जानामीति शेषः । नवर्णस्थानापन्ननिवर्णमिति प्रत्येमीत्यर्थः । एवञ्च—"निजा त्वापद्भीर्मे दशरथकुमारात् क्षितिसुते निराशास्सर्वे मय्यभिरतिजुषोऽ-

त्यन्तसुहृदः । अनिष्टश्रीर्मद्वक्क इह नियतोपेतविपत्" इत्यैव त्वयोक्तं जानामीत्यर्थः फलितः । हे! क्षितिसुते! मे दशरथ-कुमारात्तु रामात्पुनः आपद्भीः निजा नित्या—'स्वके नित्ये निजं त्रिषु' इत्यमरः । देवासुरादयः केऽपि मां न निहन्तुं शक्नुवन्ति रामस्तु निहनिष्यत्येवेत्यर्थगमकस्तुशब्दः । अभिरतिजुषः प्रेमभाजः अत एव अत्यन्तसुहृदः अतीव हितचिन्तकाः । सर्वे जना इति शेषः । राक्षसा इत्यर्थः । मयि विषये निराशाः निश्चितमरणा इत्यर्थः । इह मद्वत् अनिष्टा लोकस्यानभिप्रेता श्रीर्यस्य तथोक्तः । किञ्चेति शेषः । नियतमव्यभिचरितं यथा तथा उपेता उपस्थिता विपद्यस्य तथोक्तः कः । अस्तीति शेषः। अहमेक एव तादृश इत्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् । अत्र नकारस्यैकस्यैव च्युतत्वाद्दत्तत्वाच्च स्थानित्वे प्रतिनिधित्वे च सस्वरस्यैव तस्य ग्रहणं न तु सर्वत्रेवान्यत्र विस्वरस्य । तदुक्तं प्राक्—प्रतिदत्ताक्षरे चित्रे विस्वरं व्यञ्जनाक्षरम् । सङ्केतितं सस्वरं तु च्युतदत्तैकता यदि ॥ इति ॥ ४४ ॥

वयस्थोऽहं नित्यं न परलवनेच्छां त्यजति मे ।
मनोऽजस्रं सीते पुरमनवसादास्पदमिदम् ॥
दृगन्तक्षेपान्मे कुवलयमुपस्थापय झडि-
त्यहो निर्वेलश्रुत्यभिरुचिरिह त्वद्वचसि रे॥४५

वयस्थ इति ॥ रावणस्सीतामाह—वयस्थ इत्यादि झडिर्ति त्यन्तम् । हे! सीते! अहं नित्यमजस्रं यथा तथा वयस्थ तरुणः । अस्मीति शेषः । 'वयस्थस्तरुणो युवा' इत्यमरः । अ एव अजस्रं मे मनः परेषां शत्रूणां लवने छेदने इच्छां त्यजति । इदमित्यङ्गुलिभ्रमणेन निर्देशः । पुरं लङ्कानगरं अव सादस्य अपचयस्य आस्पदं न भवतीत्यनवसादास्पदम् । दृग न्तयोः क्षेपात् प्रेरणात् । कटाक्षवीक्षणादित्यर्थः । मे झडिति क्षि कुवलयमिन्दीवरं उपस्थापय कुवलयोपस्थितिप्रत्यायिकया दृशा म पश्येत्यर्थः । सीता प्रत्याह—अहो इत्यादि र इत्यन्तम् । रे नीच! इह अस्मिन् त्वद्वचसि निर्वैलश्रुत्यभिरुचिः अत्यन्तश्रव णेच्छा भवतीति शेषः । अहो इत्याश्चर्ये । प्रतिवचननिगूढा र्थस्तु—रे! नीच! निर्वे निर्गतवकारे इह त्वद्वचसि वयस्थोऽ हमित्यादौ लश्रुत्यभिरुचिः लकारश्रवणेच्छा भवतीति शेषः । व कारस्थानापन्नलकारं त्वद्वचश्श्रोतुमिच्छा सञ्जायत इत्यर्थः । म तिमताभिति शेषः । अहो अन्ययोक्तमन्यथैव श्रवणेच्छां जन यतीत्याश्चर्यम् । एवञ्च—'लयस्थोऽहं नित्यं न परललनेच्छ त्यजति मे मनोऽजस्रं सीते पुरमनलसादास्पदमिदम् । दृगन्त क्षेपान्मे कुललयमुपस्थापय झडिति' इत्येव त्वयोच्यमानं सन्त श्रोतुमिच्छन्तीत्यर्थः । हे! सीते! अहं नित्यं लये तिष्ठतीति लयस्थः अजस्रासन्नमृत्युरित्यर्थः । तत्र हेतुमाह—मे मनः अजस्रं **परललनेच्छां**—परस्त्रचाभिलाषं न त्यजति इदं पुरं लङ्कानगरं

अनलसात् अप्रचधीनम् । अधीनवचने सातिप्रत्ययः । भस्मीभवनार्हमित्यर्थः । आस्पदं प्रतिष्ठा यस्मिन् तत् अनलसादास्पदं भवतीति शेषः । दृगन्तक्षेपात् निनाशयिषाप्रयुक्तादिति भावः । झडिति मे कुलस्य लयं उपस्थापय । प्रतिदत्ताक्षरमिदं चित्रम् ॥

**दिगन्तश्रीर्मग्ना मम सुमुखि लङ्काऽन्तरधुना**
**विलापः क्वाप्येकोऽप्यहह न नगर्यामिह मम।**
**विलक्षत्वं बिभ्रत्यपि हरिदधीशा मदुदये**
**विलापाक्रान्तेव स्फुरति खल वाक्ते हृदि सताम्**

दिगन्तेति ॥ रावणस्सीतामाह—दिगन्तेत्यादि मदुदय इत्यन्तम् । हे! सुमुखि! अधुना दिगन्तेषु दिक्पालनगरेष्वित्यर्थः । या श्रीः सम्पत् सा मम लङ्कान्तः लङ्कापुराभ्यन्तरे मग्ना नैश्चल्येनावस्थितेत्यर्थः । सकललोकाधीशत्वात्स्वस्येति भावः । मम इह अस्यां नगर्यां लङ्कायां क्वापि एकोपि विलापः परिदेवनं न न श्रूयते । अहहेत्याश्चर्ये । तथा-ऽकृतराज्यभारोऽहं न यथैकोपि पौरेषु विपद्बन्धमाजिघ्रतीति भावः । हरिदधीशा अपि मदुदये ममाभ्युदये विषये विलक्षत्वं विस्मयान्वितत्वं बिभ्रति—'विलक्षो विस्मयान्वितः' इत्यमरः । न कथमीदृशेऽपि मय्यनुरज्यस इति वाक्यशेषः । सीता प्रत्याह—विलापेत्यादि सतामित्यन्तम् । रे! खल! ते तव वाक् विलापाक्रान्तेव परिदेवनमयीवेत्यर्थः । सतां हृदि स्फुरति जुगुप्सितत्वादिति भावः । प्रतिवचननिगूढार्थस्तु—रे! खल! ते

वाक् विला विगतलकारा पाक्रान्ता पवर्णेनाधिश्रिता लकारस्था
पन्नपकारा सतीत्यर्थः । इवेति वाक्यालङ्कारे । सतां वि
हृदि स्फुरति विभाति । एवञ्च—"दिगन्तश्रीर्भग्ना मम सुमु
पङ्कान्तरधुना विपापः क्वाप्येकोऽप्यहह न नगर्यामिह मम । वि
क्षत्वं बिभ्रत्यपि हरिदधीशा मदुदये" इत्येव तवोक्तिमभिज्ञार
मन्यन्त इत्यर्थः । हे! सुमुखि! मम दिगन्तश्रीः मया दि
न्तेभ्यस्समाहृता सम्पदित्यर्थः । अधुना इदानीं त्वत्कदर्थनदि
विवित्यर्थः । श्रीरामस्य क्रोधोद्रेकदिनेष्विति वा । पङ्कान्तः क
माभ्यन्तरे मग्ना विनाशावस्थामापन्नेत्यर्थः । मम इह नगर्यां क्व
एकोपि विपापः पापरहितः न । सर्वे पापिन इत्यर्थः । एवञ्च
पौरेष्वेकतमस्य पुण्यप्रभावाद्वा मम सम्पद्विनाशप्रातिबन्धस्स्यादि
भावः । मदुदये ममाभ्युदये विषये हरिदधीशा अपि विपक्ष
विद्वेषित्वं बिभ्रति 'कदाऽस्याभ्युदयभङ्गं द्रक्ष्यामः' इत्याशार
इत्यर्थः । कथमेवं देवैरपि विद्विष्टस्य श्रेयो मम स्यादिति भाव
प्रतिदत्ताक्षरमिदं चित्रम् ॥ ४६ ॥

शौर्यं दाशरथौ ममावनिकुमार्यप्रत्ययापादकं
मिथ्यामानवतः प्रकृत्यपटुतो नैषद्भयं मे ततः
तस्माद्भन्त मम प्रसादनविधावेवैष सज्जो भवेत्
रे किं जल्पसि निष्प्रयोजनमिदं जल्प क्षति
का ततः ॥ ४७

शौर्यमिति ॥ रावणस्सीतामाह—शौर्यमित्यादि भवेदित्यन्तम् । हे! अवनिकुमारि! दाशरथौ शौर्यं मम अप्रत्ययापादकं प्रत्यय-जनकं न भवति । 'रामश्शूरः' इत्यहं न प्रत्येमीत्यर्थः । प्रकृत्यपटुतः स्वभावेनैवासमर्थादित्यर्थः । मिथ्यामानोऽस्यास्तीति मिथ्यामानवान् तस्मात् मिथ्यामानवतः आरोपितपौरुषाभिमानादि-त्यर्थः । ततः तच्छब्दात् पञ्चम्यन्तात्तसिल् । तस्माद्रामादित्यर्थः । मे ईषत् किञ्चिदपीत्यर्थः । भयं न । तस्मात् निष्पौरुषत्वाद्धेतोः एषः रामः मम । कर्मणि षष्ठी । प्रसादनमेव विधिः तस्मिन्नेव प्रसादसम्पा-दनकर्मण्येव सज्जः सन्नद्धः भवेत् । मां प्रसादयितुं शरणागत एव स्यादित्यर्थः । हन्तेति हर्षे । अतो वृथैव तव तस्मिन्ननुराग इति वाक्यशेषः । सीता प्रत्याह–र इत्यादि तत इत्यन्तम् । रे! नीच! निष्प्रयोजनं यथा तथा इदं किं जल्पसि? अथवेति शेषः। जल्प ततः जल्पनेनेत्यर्थः । तृतीयान्तात्तसिः । का क्षतिः? न काऽप्यर्थहानिर्ममेत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! किं जल्पसि! निष्प्रयोजनं प्र इत्यानुपूर्वीकवर्णयोजनरहितं यथा तथा इदं शौर्यं दाशरथावित्यादिवचनं जल्प ततः का क्षतिः । एवञ्च—"शौर्यं दा-शरथौ ममावनिकुमार्यत्ययापादकं मिथ्यामानवतः कृत्यपटुतो नैष-द्भयं मे ततः तस्माद्धन्त मम सादनविधावेवैष सज्जो भवेत्" इति वदसि चेन्न काऽप्युचितार्थहानिरित्यर्थः । हे! अवनिकु-मारि! मम अत्ययापादकं नाशजनकं शौर्यं दाशरथौ रामे अस्तीति शेषः । न केष्वप्यन्येषु देवदानवादिष्वपीत्यर्थः । कृ-

त्यपहृतः कर्तव्येषु समर्थात् मिथ्यामानवतः मायामानवात् । आ-द्यादित्वात्पञ्चम्यास्तसिः । ततः तस्माद्रामात् । पञ्चम्यन्तात्तसिल् । मे ईषद्भयं न किन्तु महदेवेत्यर्थः । तस्मान्महाभयादेवानुमापका-द्धेतोः मम । कर्मणि षष्ठी । सादनविधौ संहारव्यापारे एष एव राम एव सज्जः भवेत् । सम्भावनायां लिङ् । हन्तेति खेदे । च्याविताक्षरमिदं चित्रम् ॥ ४७ ॥

**नातिश्लाघ्यगुणस्तव क्षितिसुते भर्ता पितुर्यो गिरा।**
**नीतिभ्रंशवशाद्विचारविमुखः कान्तारमाशिश्रियत्।**
**स क्वाहं क्व समस्तयौवतहृदां रूपश्रियाऽनङ्गदो ।**
**न स्थाने भवदुक्तमेतदयि रे पापिष्ठ रक्षोऽधम ॥**

नेति ॥ रावणस्सीतामाह—नेत्याद्यनङ्गद इत्यन्तम् । हे ! क्षि-तिसुते ! स तव भर्ता रामः अतिश्लाघ्याः गुणाः यस्य स त-थोक्तः न भवति । यः रामः नीतेस्सकाशात् भ्रंशस्य पतनस्य वशात् आयत्तत्वात् नीतिवैधुर्यबलादित्यर्थः । विचारे कार्याकार्य-विमर्शे विमुखः निरादरस्सन् पितुः दशरथस्य गिरा वचनेन कान्तारं दण्डकावनं आशिश्रियत् । आङ्पूर्वाच्छ्रयतेः 'णिश्रि' इत्यादिना चङ् । स इति पूर्वेण सम्बन्धः । कथमीदृशं तं त्वमतीव श्लाघस इत्याकूतम् । सः रामः क्व? रूपश्रिया सौ-न्दर्यसम्पदा समस्तानां यौवतानां युवतीसमूहानां युवतीशब्दात्

'तस्य समूहः' इत्यर्थे 'अनुदात्तादेरञ्' इत्यञ् । न तु युव-तिशब्दात् तथा सति भिक्षादित्वात् 'अणि भस्याढः' इति पुंवद्भावे अन्विति प्रकृतिभावे यौवनमिति स्यात् । ह्रदां अनङ्गदः कामोद्रेकद इत्यर्थः । अहं क? तस्य च मम च महदन्तरमित्यर्थः । सीता प्रत्याह—नेत्याद्यधमेत्यन्तम् । अयि! रे! पापिष्ठ! रक्षोऽधम! भवदुक्तं त्वदभिहितं एतत् नातिश्लाघ्येत्यादि वचनं न स्थाने न युक्तम्—'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । प्रतिवचननिगूढार्थस्तु—अयि! रे! पापिष्ठ! रक्षोऽधम! एतत् नातिश्लाघ्येत्यादि उक्तं वचनं भावे क्तः । नस्थाने नकारस्थाने भवत् भकारयुक्तं इति जानामीति शेषः । एवञ्च—"भाति श्लाघ्यगुणस्तव क्षितिसुते भर्ता पितुर्यो गिरा भीतिभ्रंशवशाद्विचारविमुखः कान्तारमाशिश्रियत् । स क्वाहं क्व समस्तयौवतह्रदां रूपश्रिया भङ्गदः" इत्येव त्वयोक्तं जानामीत्यर्थः । हे! क्षितिसुते! स तव भर्ता श्लाघ्याः गुणाः यस्य स तथोक्तस्सन् भाति प्रकाशते यः भीतिभ्रंशवशात् निर्भीकत्वबलादि-त्यर्थः । पितुः गिरा विचारविमुखः निर्विचारस्सन् कान्तारमा-शिश्रियत् स श्लाघ्यगुणस्सन् भातीति पूर्वेणान्वयः । सः ते भर्ता क? रूपश्रिया दशवदनत्वदंष्ट्राकराळत्वादिविकृतरूपविशेषे-णेत्यर्थः । समस्तयौवतह्रदां भङ्गदः भयङ्कर इत्यर्थः । अहं क? उभयोर्महदन्तरमित्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् ॥ ४८ ॥

**आचारेण शुभेन को मदपि सुश्रेष्ठो विदेहा-त्मजे नाहुमां किमभेत्तुकाममबलान्मर्त्यान्दयार्द्रा-**

**शयम् ॥ स्वाभेद्यं विवृताननः कलयते द्रागेव मामन्तको रे पापिन् पिशिताशनाधम भयं त्य-क्त्वैव जल्पोच्चकैः ॥ ४९ ॥**

आचारेणेति ॥ रावणस्सीतामाह—आचारेणेत्याद्यन्तक इत्य-न्तम् । हे! विदेहात्मजे! शुभेन आचारेण मदपि मत्तोपि सु-श्रेष्ठः कः? अस्तीति शेषः । शुभाचारविषये मत्तः श्रेष्ठो न कोऽप्यस्तीत्यर्थः । अबलान् बलहीनान् मर्त्यान् मनुष्यान् भेत्तुं विदारयितुं कामो यस्य स न भवतीत्यभेत्तुकामः—'तुङ्काममन-सोरपि' इति तुमुनो मकारस्य लोपः । तं मां दयया आर्द्रः आशयः अभिप्रायो यस्य तं तथोक्तं नाहुः किं? न वदन्ति किम्? अपि त्वाहुरेवेत्यर्थः । 'ब्रुवः पञ्चानाम्' इत्यादिना आहादेशः । झर्जुलु । बुधा इति शेषः । 'सकललोकहिंसा-धूर्वहेणापि मया न दुर्बला मनुजा हिंस्यन्ते' इत्यत्र मम द-यार्द्राशयत्वमेव हेतुर्न किमित्यर्थः । द्रागेव विवृतं विस्तृतं आ-ननं मुखं येन स तथोक्तः । प्रबलदुर्बलविमर्शविरहेणैव सर्वलो-कग्रसनोद्युक्त इत्यर्थः । अन्तकः मां स्वस्य अभेद्यं भेत्तुमशक्यं कलयते जानाति । सर्वहन्तुरन्तकस्याप्यवध्योऽहमस्मीत्यर्थः । सीता प्रत्याह—र इत्याद्युच्चकैरित्यन्तम् । रे! पापिन्! पिशिताशना-धम! राक्षसापशद! भयं त्यक्त्वैव निर्भयस्सन्नेवेत्यर्थः । उच्चकैः जल्प । स्त्रीणां समक्षमात्मश्लाघायां न कश्चिदपि ते प्रतिबन्ध इत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! पापिन्! पिशिताशनाधम!

भयं भे इत्यानुपूर्वीकं वर्णं वर्णरूपार्थवतो भे इत्यस्माच्छब्दाद्विती-यैकवचने अम्ययादेशो च भयमिति रूपसिद्धिः । त्यक्त्वैव उच्चकैः जल्प । एवञ्च—"आचारेण शुनको मदपि सुश्रेष्ठो विदेहात्मजे नाहुर्मां किमसुकाममबलान्मर्त्यान्दयार्द्राशयं स्वाद्यं वि-वृताननः कलयते द्रागेव मामन्तकः' इति जल्पेत्यर्थः पर्यवस्य-ति । हे! विदेहात्मजे! आचारेण शुनकोपि मत् मत्तः अव-धिभूतात् सुश्रेष्ठः तस्मादप्यहं दुराचार इत्यर्थः । अबलान् मर्त्यान् अत्तुं भक्षयितुं कामो यस्य तं मां दयार्द्राशयं नाहुः किमिति विपरीतलक्षणया निर्दयतमं न वदन्ति किमित्यर्थः । अन्तकः विवृताननस्सन् मां द्रागेव स्वाद्यं कलयते । मां भ-क्षयितुं व्यात्ताननस्त्वरत इत्यर्थः । च्यावितक्षरमिदं चित्रम् ॥४९

**जनस्यास्यैश्वर्यं जगदमितभूतं जनकजे यशो-बृन्दं मालाऽमलरुचि हरित्सु प्रसरति । मतिस्सर्व-श्लाघ्या त्वदभिरुचये हन्त न कथं विभाति व्या-हारः खल तव विमोहाढ्य इति मे ॥ ५० ॥**

जनस्येति ॥ रावणस्सीतामाह—जनस्येत्यादि कथमित्यन्तम् । हे! जनकजे! अस्य जनस्येति षष्ठ्यन्तपदस्य त्रिष्वपि पादेष्व-नुषङ्गः । ममेत्यर्थः । ऐश्वर्यमाधिपत्यं जगदमितभूतं लोकाधिक-तामापन्नं यशोबृन्दं कीर्तिजालं मालेव पुष्पस्रगिव अमला रुचि-र्यस्य तथोक्तं सत् हरित्सु दिक्षु प्रसरति । सर्वैः श्लाघ्या मतिः

बुद्धिः त्वदभिरुचये तवाभिप्रीतये । कथं न भवतीति शेषः । हन्तेत्याश्चर्ये । सीता प्रत्याह—विभातीत्यादि म इत्यन्तम् । रे! खल! तव व्याहारः उक्तिः विमोहाढ्यः अज्ञानसान्द्रः इति मे विभाति । प्रतिवचननिगूढार्थस्तु—रे! खल! तव व्याहारः जन स्येत्यादिः विमः विगतमकारः हाढ्यः हकारपरिपूर्णः मकारस्थानापन्नहकार इत्यर्थः । इति मे विभामि । एवञ्च—"जनस्यास्यैश्वर्यं जगदहितभूतं जनकजे यशोवृन्दं हालाहलरुचि हरित्सु प्रसरति । हतिस्सर्वश्लाघ्या त्वदभिरुचये हन्त न कथम्" इत्येव त्वयोक्तमहं जानामीत्यर्थः । हे! जनकजे! अस्य जनस्य मम ऐश्वर्यं जगद्भ्यः अहितभूतं सकललोकविद्विष्टमित्यर्थः । यशोवृन्दं हालाहलस्य विषस्येव रुचिर्यस्य तथोक्तं सत् । दुस्सहं दूष्यं च सदित्यर्थः । हरित्सु प्रसरति । सर्वश्लाघ्या सकललोकैराशंसनीयेत्यर्थः । हतिः वधः कथं त्वदभिरुचये न न स्यात् । स्यादेवेत्यर्थः । हन्तेति खेदे । प्रतिदत्ताक्षरमिदं चित्रम् । शिखरिणीवृत्तम् ॥ ९० ॥

**अधिश्रीरैश्वर्यान्निधिपतित एषोऽस्म्यवनिजे पु-**
**मान्वीरः को मां समिति धिनुयाद्दोर्विलसितैः ।**
**धियाऽत्यन्तं स्फीतोऽभ्युदय इह मे रे निशिचर**
**प्रवेष्टव्यश्रोत्राऽस्म्यपि कुवचसाऽनेन विधिना ॥**

अधिश्रीरिति ॥ रावणस्सीतामाह—अधिश्रीरित्यादि म इत्य-

न्तम् । हे! अवनिजे! एष इति स्वाभिमुखेन हस्तेनात्मनो निर्देशः अहमित्यर्थः । ऐश्वर्याद्धेतोः निपतितः कुबेरादवधिभूतात् । पञ्चम्यन्तात्तसिः । अधिश्रीः अधिकसम्पत्कः अस्मि । वीरः कः पुमान् समिति युद्धे दोर्विलसितैः बाहुविलासैः पराक्रमविजृम्भणैरिति यावत् । मां धिनुयात् प्रीणयेत् न कोपि जगति मदभिनन्दनीयपराक्रमो वीरोऽस्तीत्यर्थः । इह लोके मे मम अभ्युदयः धिया बुद्ध्या । तत्कार्यभूतेन नीतिविभवेनेत्यर्थः । अत्यन्तं यथा तथा स्फीतः प्रवृद्धः । एवं सम्पच्छौर्याभ्युदयशालिन्यपि मयि न कुतोऽनुरज्जचस इति वाक्यशेषः । सीता प्रत्याह—र इत्यादि विधिनेत्यन्तम् । रे! निशिचर! विधिना दैवेन प्रतिकूलेनेति भावः । 'विधिर्विधाने दैवेऽपि' इत्यमरः । अनेन अधिश्रीरित्यादिना कुवचसा दुर्वचनेनापि प्रवेष्टव्ये श्रोत्रे यस्याः तथोक्ता अस्मि । प्रतिकूलं दैवमेव मया त्वदीयमेवं दुर्भाषितमपि श्रावयतीत्यर्थः । प्रतिवचननिगूढार्थस्तु—रे! निशिचर! अनेन अधिश्रीरित्यादिना कुवचसाऽपि विधिना विगतधिवर्णेन सता प्रवेष्टव्ये श्रोत्रे यस्यास्तथा तथोक्ताऽस्मि । एवञ्च—अधिश्रीरित्यादि त्वदुक्तं वचनं धि इत्यानुपूर्वीकं वर्णमन्तरा "अश्रीरैश्वर्यान्निपतित एषोऽस्मचवनिजे पुमान्वीरः को मां समिति नुयाद्दोर्विलसितैः यात्यन्तं स्फीतोऽभ्युदय इह मे" इत्युक्तं चेन्मम श्रोत्रे प्रवेष्टुमर्हतीत्यर्थः। हे! अवनिजे! अश्रीः असम्पत्कः एषोऽहं ऐश्वर्यान्निपतितोऽस्मि वीरः कः पुमान् समिति दोर्विलसितैः मां नुयात् । न केनापि

वीरेण युध्यभिनन्दनीयं मम शौर्यमित्यर्थः । इह लोके स्फ मेऽभ्युदयः अन्तं नाशं याति । च्यावितात्क्षरमिदं चित्रम् । पूर्ववत् ॥ ९१ ॥

**आशार्हाखिलसम्पदर्यभिमुखव्यक्तीभवत्पौरु स्सीतेऽहं वनवारिजावमतिभृद्वक्त्रावलिस्सङ्करे न श्रूये किमशोचितस्वजनतापर्यावृतश्च त्वया मूर्खासि यथोदिताखिलगुणः प्रागेव नीच श्रुतः**

आशेति ॥ रावणसीतामाह—आशार्हेत्यादि त्वयेत्यन्तम् । हे ! सीं अहं आशायाः अर्हाः योग्याः स्पृहणीयाः—"वयमपीदृशस्सम्पदे नुभूयास्म" इति स्पृहां द्रष्टृणां जनयन्त्य इत्यर्थः । अखिलाः समः सम्पदो यस्य स तथोक्तः । अरीणामभिमुखं यथातथा व्यक्तीभवत् पौ यस्य स तथोक्तः । सङ्करे युद्धे वनवारिजानां जलकमलानां अवमा मवमानं बिभर्ति पुष्णातीति वनवारिजावमतिभृत् वक्त्राणां मुखा आवलिः पङ्क्तिर्यस्य स तथोक्तः । 'वने सलिलकानने' इत्यमर कमलानामम्लानत्वद्योतनायोपात्तं वनपदं बोध्यम् । सम्भवेदेव म्ला त्वमम्भसस्समुद्धृतानामम्भोजानामिति । युध्यपरिक्षीणोल्लास इत्यर्थ अशोचितया येन केनापि शोकमप्रापितया स्वजनतया स्वजनसमूहेन "ग्रामजनबन्धुभ्यः" इति समूहार्थे तल्प्रत्ययः । पर्यावृतश्च त्वया श्रूये किं? श्रुतिविषयो न क्रिये किं? । शृणोतेः कर्मणि लङ्युत्तमपुरुषे वचनम् । सीता प्रत्याह—र इत्यादि श्रुत इत्यन्तम् ।

मूर्खे! नीच! त्वं यथोदिताः पूर्वोक्तविधाः अखिलाः गुणाः यस्य स तथोक्तस्सन् प्रागेव पूर्वमेव श्रुतोसि । अतः पुन-स्स्वगुणान्मा वादीरिति वाक्यशेषः । प्रतिवचननिगूढार्थस्तु—रे! मूर्खे! त्वं यथोदिताः पूर्वोक्तां वर्णानुपूर्वीमनतिक्रान्ताः अखिलाः गुणाः विशेषणानि यस्य स तथोक्तस्सन् प्रागेव प्रथमत एव विशेषणानामाद्यंश एवेत्यर्थः । नी च न इत्यानुपूर्वीकवर्णवांश्च अकारान्तान्नशब्दात् 'अत इनिठनौ' इति मत्वर्थीय इनिप्रत्ययः। श्रुतोसि । तथा च—त्वं नाशार्हाखिलसम्पत् नार्यभिमुखव्यक्तीभवत्पौरुषः सङ्गरे नवनवारिजावमतिभृद्वक्रावळिः नाशोचितस्वजनतापर्यावृतश्च सन् श्रुतोसीत्यर्थः । नाशार्हाः आसन्नविनाशाः अखिलाः सम्पदो यस्य स तथोक्तः । नारीणां अङ्गनानां अभिमुखं यथातथा व्यक्ती-भवत् पौरुषं यस्य स तथोक्तः । सङ्गरे युद्धे नवनवं यथातथा अरिजां शत्रुजन्यां अवमतिं बिभर्ति धारयतीति तथोक्ता वक्रावळिर्यस्य स तथोक्तः । नाशोचितया नाशयोग्यया अवश्यं नङ्क्ष्यन्त्या इत्यर्थः स्वजनतया पर्यावृतश्च सन् श्रुतोसि । अधिदत्ताक्षरमिदं चित्रम्।

कस्मिंश्चिदधिके वर्णे दत्तेऽर्थो यत्र भिद्यते ।
अधिदत्ताक्षरं नाम चित्रं तदिति बुध्यताम् ॥

इति तल्लक्षणात् ॥ ९२ ॥

**सङ्ग्रामेषु जयश्रियं परगतां रामो दृढं मन्यते**
**नापि श्लाघ्यगुणो न वाचि च पटुर्मद्विदेहात्मजे॥**

**प्रव्याहाररसज्ञता न खलु ते यन्मय्यरक्ताऽसि
वाक्ते पापविपाकसङ्गतिमतीत्येवावगच्छाम्यहम्॥**

सङ्ग्रामेष्विति ॥ रावणस्सीतामाह—सङ्ग्रामेष्वित्याद्यसीत्यन्तम्
हे! विदेहात्मजे! रामः सङ्ग्रामेषु युद्धेषु जयश्रियं विजयलक्ष्मं
परगतां शत्रुगामिनीं दृढं गाढं यथातथा मन्यते जानाति। '
रिपूनहं जेष्यामि त एव सर्वथा मां जेष्यन्ति' इत्यसन्दिग्ध
निश्चिनोतीत्यर्थः। निरुत्साहत्वादिस्स्वदोषस्यैव तथा प्रत्यायकत्वा
दिति भावः। मद्वत् मया तुल्यं अहमिवेत्यर्थः। श्लाघ्या
गुणाः यस्य स तथोक्तोपि न भवति। वाचि च वचनेऽपि
पटुस्समर्थः न भवति। ते तव प्रव्याहारेषु मदीयासु प्रौढो
क्तिषु विषये रसज्ञता रसाभिज्ञत्वं न खलु नैवास्ति। यत
यस्मात्कारणात् मयि एवं वाग्मिन्यपीति भावः। अरक्ता अ-
ननुरक्ता असि। तस्मात्ते प्रव्याहारेषु रसज्ञता नैवास्तीति पूर्वे-
ण सम्बन्धः। सीता प्रत्याह—र इत्याद्यहमित्यन्तम्। रे! नीच!
ते तव वाक् पापस्य विपाकेन परिपाकेन सङ्गतिमती संसक्ता
इत्येव अहं अवगच्छामि जानामि। फलोन्मुखपापत्वादेव त्वमेवं
जल्पसीति जानामीत्यर्थः। प्रतिवचननिगूढार्थस्तु—रे! पाप!
पापिन्! ते वाक् सङ्ग्रामेष्वित्यादिः विपा विगतपकारा कसङ्ग-
तिमती ककारेण सम्बद्धा। पकारस्थानापन्नककारेत्यर्थः। इत्येव

अहं अवगच्छामि । एवञ्च—"सङ्ग्रामेषु जयश्रियं करगतां रामो दृढं मन्यते नाकिश्लाघ्यगुणो न वाचि च कटुर्मद्वद्विदेहात्मजे । क्रव्याहाररसज्ञता न खलु ते यन्मय्यरक्ताऽसि" इत्येव त्वमवादीरिति जानामीत्यर्थः । नाकिभिः देवैः श्लाघ्याः गुणा गाम्भीर्यादयो यस्य स तथोक्तः रामः सङ्ग्रामेषु जयश्रियं करगतां हस्तगताम् । अयत्नलभ्यामित्यर्थः । दृढमसन्दिग्धं यथातथा मन्यते । मद्वत् वाचि वचने कटुः क्रूरश्च न भवति । ते तव क्रव्यं मांसमेवाहारः अशनं तस्मिन् रसज्ञता रसाभिज्ञत्वं न खलु नास्त्येव । यत् यस्मात्कारणात् मयि अरक्ता अननुरक्ता असि तस्मात्ते क्रव्याहाररसज्ञता न खल्विति पूर्वेण सम्बन्धः । मांसभोजनरसाभिज्ञा चेत्त्वं मय्यनुरक्तैव स्या इत्यर्थः । 'पललं क्रव्यमामिषम्' इत्यमरः । प्रतिदत्ताक्षरमिदं चित्रम् ॥

**मत्सेनाऽभ्यरिमाहवे मृगयते सा तावकं किं पुनर्नाथं दुर्गतिभावनाशिततमौजस्कं विदेहात्मजे॥
तस्मान्मेऽङ्ग रतोत्सवं नियतमेवावेहि ते प्रीतिदं रे किं जल्पसि जल्प वा खल हृदा गङ्गामहं भावये॥**

मत्सेनेति ॥ रावणस्सीतामाह—मत्सेनेत्यादि प्रीतिदमित्यन्तम् । हे ! विदेहात्मजे ! मत्सेना आहवे युद्धे अभ्यरिं अभिगच्छन्तं शत्रुं मृगयते अन्विष्यति । न कोप्यरिर्मत्सेनामाभिगच्छति किन्तु तद्दर्शनादेव भयेन पलायत इत्यर्थः । सा मत्सेना दुर्गतिभावेन

दारिद्र्यस्वभावेन । सहायसम्पद्विकलतयेत्यर्थः । नाशिततमं अ-तिशयेन नाशितं ओजो यस्य तं तथोक्तम् । शैषिकः कप्रत्य-यः । तावकं नाथं रामं किं पुनः मृगयत इति किमुत म-त्स्यैन्याङ्गयेनौजस्विष्वपि पलायमानेषु निरोजा रामः पलायत इति कुतो वा वक्तव्यमित्यर्थः । 'दुर्गती नैस्व्यनरकौ' इति नाना-र्थरत्नमाला । 'भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्तुषु' इत्यमरः। तस्माद्धेतोः 'रामोऽरीन्विजित्य मामितो नीत्वा प्रीणयेत्' इति तव प्रत्याशाया वृथात्वादित्यर्थः । अङ्ग! हे! सीते! "अथ सम्बोधनार्थकाः । स्युः प्याट् पाडङ्ग हे है भोः" इत्यमरः। मे मम रतोत्सवमेव सुरतोद्धर्षमेव नियतं निश्चितं यथातथा ते तव प्रीतिदं अवेहि जानीहि। यदि प्रीत्याऽवस्थातुमिच्छसि तर्हि मम रतिमनुमन्यस्वेत्यर्थः । सीता प्रत्याह—र इत्यादि भावय इत्यन्तम् । रे! खल! किं जल्पसि? किमित्याक्षेपे । मैवं पापवचनं जल्पीरित्यर्थः । अथवा जल्प अहं हृदा मनसा गङ्गां भावये ध्यायामि । ध्यानमात्रादेव निखिलपापनिवर्तकभागीरथी-ध्यानेनाश्राव्यश्रवणपापमपनोदय इत्यर्थः । प्रत्युक्तिनिगूढार्थस्तु— रे! खल! किं जल्पसि अथवा जल्प अहं गं ग इत्यानुपू-र्वीकं वर्णं गां गा इत्यानुपूर्वीकं हृदा भावये। एवञ्च—"मत्से नाऽभ्यरिमाहवे मृगायते सा तावकं किं पुनर्नाथं दुर्गतिभावना-शिततमौजस्कं विदेहात्मजे तस्मान्मेऽङ्गारतोत्सवं नियतमेवावेहि ते प्रीतिदम्" इत्येव त्वयोक्तं जानामीत्यर्थः । हे! विदेहात्मजे!

मत्सेना आहवे अरिमभि शत्रोरामिमुख्ये 'अभिरभागे' इति कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया। मृगायते मृग इवाचरति पलायत इत्यर्थः । 'कर्तुः क्यङ्' इति क्यङ् । ङित्त्वादात्मनेपदम् । सा मत्सेना दुर्गायाः दुष्टदैत्यदमनाय धृतरौद्ररूपायाः कात्यायिन्याः अतिभावनया अतीव तादात्म्यानुसन्धानेन शिततमं अतिनिशितं ओजो यस्य तं दुर्गातिभावनाशिततमौजस्कं तावकं नाथं राममभि किं पुनः किमुत शत्रुसामान्यस्यावलोकनादेव पलायमाना मत्सेना त्रिभुवनैकवीरं राममवलोक्य पलायत इति कुतो वा वक्तव्यमित्यर्थः । तस्मात् मम ससहायतायाः वृथात्वाद्धेतोः मे मम नियतं सर्वथैव भविष्यन्तं अङ्गारतोत्सवमेव चित्यग्निज्वालावृताङ्गत्वापतिष्यदङ्गारत्वरूपमुत्सवमेव ते प्रीतिदं अवेहि । ममावश्यं मरणतस्तव प्रीतिर्भविष्यतीति जानीहीत्यर्थः । वर्णचित्रमिदं प्रतिदत्ताक्षराख्यमेव । किन्त्वत्र गकारस्यैकस्यैव च्युतत्वाद्दत्तत्वाच्च सस्वरस्यैव तस्य ग्रहणं, न त्वन्यत्रेव विस्वरस्य ।

प्रतिदत्ताक्षरे चित्रे विस्वरं व्यञ्जनाक्षरम् ।
सङ्केतितं सस्वरं तु च्युतदत्तैकता यदि ॥

इति परिभाषानियमात् ॥ ९४ ॥

**महाकुल इति श्रुतः क इव मद्दुर्वीसुते सतां श्रुतिविहारिणी मदपदानकीर्तिस्सदा । अनाहत-**

**पराक्रमो युधि परैस्सदैवास्मि रे तवोक्तिरपहास्सदा भवितुमेव सैषाऽर्हति ॥ ५५ ॥**

महाकुल इति ॥ रावणस्सीतामाह महाकुल इत्याद्यस्मीत्यन्तम् । हे! उर्वीसुते! मद्वत् मया तुल्यं यथातथा महत् कुलं यस्य स तथोक्तः इति श्रुतः क इव अस्तीति शेषः । इवशब्दो वाक्यालङ्कारे। मदपदानकीर्तिः कैलासविक्षेपणादिभिर्मम वृत्तैः कर्मभिस्सञ्जनितं यशः—'अपदानं कर्म वृत्तम्' इत्यमरः । सदा सतां श्रुत्योः विहरतीति तथोक्ता । ताच्छील्ये णिनिः 'ऋन्नेभ्यो ङीप्' इति ङीप् । युधि युद्धे सदा न तु कदाचित् परैः शत्रुभिः अनाहतः अनपहतः अकुण्ठित इति यावत् । पराक्रमो यस्य स तथोक्त एव अस्मि। सीता प्रत्याह—र इत्याद्यर्हतीत्यन्तम् । रे! नीच! सैषा पूर्वोक्ता महाकुल इत्यादिः तव उक्तिः अपहासदैव अपकर्षाभिव्यञ्जकहाससम्पादिकैव । श्रोतॄणां मुख इति शेषः। भवितुमर्हति । तवोक्तिमाकर्णयन्तस्सर्वेऽप्यपहसन्त्येव न त्वभिनन्दन्तीत्यर्थः । प्रत्युक्तिनिगूढार्थस्तु—रे! नीच! सैषा तव उक्तिः महाकुल इत्यादिः अपहा अपगतहकारा सती सदैव दकारसहितैव हकारस्थानापन्नदकारैवेत्यर्थः । भवितुमर्हति । एवञ्च—"मदाकुल इति श्रुतः क इव मद्वदुर्वीसुते सतां श्रुतिविदारिणी मदपदानकीर्तिस्सदा । अनाद्दतपराक्रमो युधि परैस्सदैवास्मि" इत्येव त्वं वक्तुमर्हसीत्यर्थः । हे! उर्वीसुते! मद्वत् मदेन आकुलः

विह्वलः इति श्रुतः क इव अस्तीति शेषः । अहमेव महान्मदोन्मत्त इत्यर्थः । मदपदानकीर्तिः सदा सतां श्रुतिं कर्णं विदारयति विदळयतीति तथोक्ता । अहं युधि सदा परैः अनादृतः अवधीरितः पराक्रमो यस्य स तथोक्त एव अस्मि । प्रतिदत्ताक्षरमिदं चित्रम् । पृथ्वीवृत्तम्—

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।

इति लक्षणात् ॥ ९९ ॥

**सीते त्वामपहृत्य मय्युपगते रामादियं मत्पुरी**
**भाति प्राप्तवतीव कञ्चन शुभश्रीसङ्गमन्यादृशम् ।**
**सव्याचारलवोऽप्यलभ्य इह मय्यन्विष्वमाणोपि**
**रे जल्प स्वैरमसम्भवत्तव वचो रक्षोऽधमावैम्यहम् ॥ ५६ ॥**

सीते इति ॥ रावणस्सीतामाह—सीत इत्याद्यन्विष्यमाणोपीत्यन्तम् । हे! सीते! मयि रामात् अपादानात् त्वां अपहृत्य उपगते सति । इयमिति हस्तेन निर्देशः । मत्पुरी लङ्का अन्यादृशं लोकोत्तरप्रकारकं 'त्यदादिषु' इत्यादिनाऽन्यशब्दोपपदकात् दृशेः कञ् । 'आ सर्वनाम्नः' इत्यन्यशब्दस्याकारोऽन्तादेशः। कञ्चन अनिर्वचनीयं शुभश्रीसङ्गं शुभलक्ष्मीसम्बन्धं प्राप्तवतीव भाति । इह अस्मिन् स्वाभिमुखेन हस्तेनात्मनो निर्देशार्थमिदं

विशेषणम् । मयि अन्विष्यमाणोपि मृग्यमाणोपि । अनुपूर्वका-दिष्यतेः कर्मणि लटश्शानच् । सव्याचारस्य वामाचारस्य दुराचारस्येत्यर्थः । 'वामं शरीरे सव्यं स्यात्' इत्यमरः । लवोपि लेशोपि अलभ्यः लब्धुमशक्यः । सीता प्रत्याह—रे इत्याद्यहमित्यन्तम् । रे! रक्षोऽधम! स्वैरं स्वच्छन्दं यथातथा जल्प । अहं तव वचः असम्भवत् असङ्गच्छमानं अवैमि । पूर्वार्धस्य तृतीयचरणस्य च मिथोऽर्थतस्सम्बन्धविरहादनुपपद्यमानं जानामीत्यर्थः । प्रत्युक्तिनिगूढार्थस्तु—रे! रक्षोऽधम! स्वैरं जल्प । अहं तव वचः न विद्यते सः यस्मिन्नित्यसं सकाररहितं भोऽस्मिन्नस्तीति भवत् भकारसहितम् । सकारस्थानापन्नभकारमित्यर्थः। अवैमि जानामि । एवञ्च—"भीते त्वामपहृत्य मय्युपगते रामाद्दियं मत्पुरी भाति प्राप्तवतीव कञ्चन शुभश्रीभङ्गमन्यादृशम् ॥ भव्याचारलवोऽप्यलभ्य इह मय्यन्विष्यमाणोपि" इत्येव त्वयोक्तं जानामीत्यर्थः । प्रकरणवशादेव सीतायास्सम्बुद्धिरत्राध्याहार्या । मयि त्वामपहृत्य रामाद्भीते उपगते सति 'रामः पश्येद्यदि मां हन्यात्' इति भयेन सत्वरं पलाय्यागते सतीत्यर्थः । इयं मत्पुरी अन्यादृशं कञ्चन शुभश्रीभङ्गं प्राप्तवतीव भाति । इह मयि अन्विष्यमाणोपि भव्याचारस्य लवोपि अलभ्यः । कथमीदृशस्य मम श्रेयस्स्यादिति वाक्यशेषः । प्रतिदत्ताक्षरमिदं चित्रम् ॥ ९६ ॥

**स्फुटं रामस्य स्याद्युधि मम जयश्रीविहरणं**

**स दृष्ट्वा मां विद्यादयमवनिजेऽहस्कर इति॥**
**प्रहारप्रावीण्यं मम समवगच्छेदपि च रे**
**वचोऽभिज्ञास्सर्वे तव विदुरहन्ताऽन्वितमि-**
**दम्॥ ५७॥**

स्फुटमिति ॥ रावणस्सीतामाह—स्फुटमित्याद्यपि चेत्यन्तम् । हे! अवनिजे! मम जयश्रीविहरणं जयलक्ष्मीखेलनम् । इदानीं वद-तां मुखतश्श्रूयमाणमिति भावः । युधि युद्धे रामस्य स्फुटं व्यक्तं स्यात् । 'नूनमयं सर्वजित्वरो महावीरः' इति साक्षादनुभवादेव स तदा प्रतीयादित्यर्थः । स रामः मां दृष्ट्वा अयं पुरोवर्ती अहस्करस्सूर्यः इति विद्यात् जानीयात् । तादृशत्वान्मत्तेजसामिति भावः । अपि च मम कर्तुः प्रहारे विषये शरखड्गाद्यायुध-साध्य इति भावः । प्रावीण्यं नैपुण्यं समवगच्छेत् तदपीदानीं श्रुतं तदा स्वयमनुभवात्सम्यग्जानीयादित्यर्थः । सीता प्रत्याह—र इत्यादीदमित्यन्तम् । रे! नीच! अभिज्ञाः प्राज्ञाः सर्वे जनाः तव इदं वचः स्फुटं रामस्येत्यादि वचनं अहन्तया अहङ्कारेण अन्वितं युतं विदुः जानन्ति—'विदो लटो वा' इति झेर्जुस् । प्रत्युक्तिनिगूढार्थस्तु—रे! नीच! अभिज्ञाः अर्थौचित्यं जानन्तः सर्वे तव इदं वचः अहं न विद्यते हः यस्मिन्निति विग्रहात् हकाररहितं, तान्वितं तकारेण सहितम् । हकारस्थानापन्नतका-रमित्यर्थः । विदुः जानन्ति । एवञ्च—"स्फुटं रामस्य स्या-

युधि मम जयश्रीवितरणं स दृष्ट्वा मां विद्यादयमवनिजे तस्कर इति । प्रतारप्रावीण्यं मम समवगच्छेदपि च" इत्येव त्वयोक्तं जानन्तीत्यर्थः । हे! अवनिजे! स्फुटं असन्दिग्धं यथातथा युधि रामस्य मम जयश्रीवितरणं जयलक्ष्मीदानं स्यात् भवेत् । सर्वथा युधि रामायाहं जयलक्ष्मीं दद्यामित्यर्थः । रामस्य ममेत्युभयत्र क्रमेण सम्प्रदानत्वकर्तृत्वसम्बन्धाभिप्रायिका शेषे षष्ठी बोध्या । सः रामः मां दृष्ट्वा अयं तस्करः चोरः इति विद्यात् जानीयात् । अपिच मम प्रतारप्रावीण्यं वञ्चनाचातुर्यम् । मायायुद्धदर्शितमिति भावः । समवगच्छेत् केवलमयं मायावीरो न तु बाहुवीर इति सम्यग्जानीयादित्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् । शिखरिणीवृत्तम् ॥ ९७ ॥

**वैदेह्यस्मि विलोकयाहमरिपुत्रासाकुलस्सर्वदा**
**कीर्तिश्रीविपुलोपसंभरणकृत्यैकाग्र्यभागस्म्यहम् ।**
**वैरित्रासनपुष्टहर्षसकलस्वानीकिनीकोऽस्मि रे**
**चोरस्त्वं पिशिताशनाधम पुमानित्येव न ज्ञायसे॥**

वैदेहीति ॥ रावणस्सीतामाह—वैदेहीत्याद्यनीकिनीकोऽस्मीत्यन्तम् । हे! वैदेहि! अहं सर्वदा रिपुत्रासेन शत्रुभयेन आकुलः क्षुभितान्तःकरणः न भवतीति अरिपुत्रासाकुलः अस्मि । अहं कीर्तिश्रियाः यशोलक्ष्म्याः विपुलं विस्तृतं यदुपसम्भरणमभिवर्धनं तस्य कृतिषु रचनासु । शौर्यौदार्यादिगुणातिशयाविष्करण-

रूपास्विति भावः । ऐकाग्रचमेकाग्रतां 'गुणवचन' इत्यादिना ष्यञ् । भजतीति तथोक्तः अस्मि । "भजेर्ण्विः" इति ण्वि-प्रत्ययः । किञ्चाहमिति शेषः । वैरिणां त्रासनेन भयोत्पादनेन पुष्टः हर्षः यस्यास्तथोक्ता सकला स्वस्य अनीकिनी सेना यस्य तथोक्तः अस्मि । 'नद्यृतश्च' इति कप् । विलोकय । एवंगुणं मां जानीहीत्यर्थः । सीता प्रत्याह—र इत्यादि ज्ञायस इत्यन्तम् । रे! पिशिताशनाधम! राक्षसापशद! चोरः तस्करः त्वं पुमान् पुरुष इत्येव न ज्ञायसे नावगम्यसे । बुधैरिति शेषः । रामलक्ष्मणौ विघटय्य चोरवृत्त्या मामपहृतवता त्वया स्वस्मिन् शौर्यधैर्यादिपुरुषलक्षणविपर्ययस्यैव प्रख्यापितत्वादिति भावः। गूढार्थस्तु—रे! पिशिताशनाधम! चोरः त्वं पुमान् पु इत्याकारकवर्णवानिति नैव ज्ञायसे। पुमानित्यत्र पुः अस्यास्तीति विग्रहः। 'तदस्य' इत्यादिना मतुप्। एवञ्च—त्वं पु इत्याकारकवर्णरहितविशेषणकतयैव बुधैर्ज्ञायमानत्वात् "वैदेह्यस्मि विलोकयाहमरित्रासाकुलस्सर्वदा कीर्तिश्रीविलोपसम्भरणकृत्यैकाग्रचभागस्म्यहं वैरित्रासनष्टहर्षसकलस्वानीकिनीकोऽस्मि" इत्येव वक्तुमर्हसीत्यर्थः । हे! वैदेहि! अहं सर्वदा अरित्रासेन शत्रुभयेन आकुलः अस्मि । अहं कीर्तिश्रियाः विलोपसम्भरणस्य विच्छेदापादनस्य कृत्येषु व्यापारेषु परदारापहारादिष्विति भावः । ऐकाग्रचं भजतीति तथोक्तः अस्मि । वैरित्रासेन शत्रुभयेन नष्टः हर्षः यस्याः तथोक्ता सकला स्वस्य अनीकिनी यस्य तथोक्तः अस्मि । विलोकय । च्यावितात्तरमिदं चित्रम् ॥ ९८ ॥

**सीते शौर्यरमाऽऽहितेन मनसा भर्ता त्वदीयस्स किं सङ्ग्रामे परमादरादहमिव व्याप्नोति सर्वा दिशः । प्रेमा ते मयि नोचितः किमु महाहर्षोदय-स्सर्वतस्स्वैरं रे पिशिताश जल्प न मया श्राव्यं तवेदं वचः ॥ ५९ ॥**

सीते इति ॥ रावणस्सीतामाह—सीते इत्यादि सर्वत इत्य-न्तम् । हे! सीते! स त्वदीयो भर्ता रामः अहमिव शौर्यर-मायां शौर्याभिमानिन्यां लक्ष्म्यां आहितेन । शौर्यश्रीरवश्यं सम्पादनीयेति कृतनिश्चयेनेत्यर्थः । मनसा सङ्ग्रामे युद्धे परमश्चा-सावादरश्च तस्मात् सर्वाः दिशः व्याप्नोति किम्? प्रतिदिश-मभिषेणयति किमित्यर्थः । मयि एवं सर्वदिग्विजित्वर इति भा-वः । ते तव सर्वतः सर्वेषु विषयेषु वस्त्राभरणादिष्विति भावः। सप्तम्यन्तात्तसिः । महान् हर्षस्य सन्तोषस्य उदयः अतिशयः यस्मात् हेतुभूतात्तथोक्तः प्रेमा अनुरागः नोचितः किमु? उचित एवेत्यर्थः । सकलदिग्जिष्णौ मय्यनुरक्तया त्वया न कश्चिदपि दुर्लभो भविष्यति वस्त्राभरणादिरभिमतार्थ इति समुदितार्थः । एव-मेवोक्तं श्रीरामायणे रावणेन—"लोकेभ्यो यानि रत्नानि" इत्या-दिना । सीता प्रत्याह—स्वैरमित्यादि वच इत्यन्तम् । रे! पिशिताश! राक्षस! स्वैरं स्वेच्छया जल्प तव इदं पूर्वोक्तं सीते शौर्यरमेत्यादि वचः मया न श्राव्यं श्रोतुमनर्हम् । गूढा-

र्थस्तु—रे! पिशिताश! स्वैरं जल्प तवेदं वचः मया मा इ-त्याकारकेण वर्णन हेतुना न श्राव्यं मावर्णं विरहय्योक्तं चे-च्छ्राव्यमित्यर्थः । बुधैरिति शेषः । एवञ्च—"सीते शौर्यरहितेन मनसा भर्ता त्वदीयस्स किं सङ्गामे परदरादहमिव व्याप्नोति सर्वा दिशः प्रेते मयि नोचितः किमु महाहर्षोदयस्सर्वतः" इत्येव त्वं वक्तुमर्हसीत्यर्थः फलितः । हे! सीते! सः त्वदीयः भर्ता अहमिव सङ्गामे शौर्यरहितेन मनसा परदरात् शत्रुभयात्—'परोऽरिपरमात्मनोः' इति विश्वः । 'दरत्रासौ भीतिर्भीस्साध्वसं भयम्' इत्यमरः । सर्वाः दिशः व्याप्नोति किं? प्रतिदिशं धावति किम्? न स स्वप्नेऽप्येवं कुर्यादित्यर्थः । मयि प्रेते सति सर्वतः सर्वेषां सर्वेषु लोकेष्विति वाऽर्थः । षष्ठ्यन्तात्सप्तम्यन्ताद्वा तसिः । महाहर्षोदयः महतः हर्षस्य आविर्भावः नोचितः किं? उचित एवेत्यर्थः । दुष्टनाशस्य सर्वाभिमतत्वादिति भावः । इदं च च्यावितार्क्षरमेव चित्रम् ॥ ९९ ॥

**सर्वत्राहमभीक एव विदधे कालोचितां प्रक्रियां**
**दुष्कर्मस्ववगच्छ लज्जिततमं सीते प्रकृत्यैव माम् ।**
**दृग्धारां शुभलोचनेऽतिचतुरामाधेहि मय्याशु रे**
**वाक्के पापसमाविलेति न कथं विद्युर्दुरात्मन्बुधाः ॥**

सर्वत्रेति ॥ रावणस्सीतामाह—सर्वत्रेत्यादि आश्वित्यन्तम् ॥ हे! सीते! अहं नास्ति भीर्यस्य सोऽभीको निर्भयः स एव सन्

असिद्ध्यन्यथासिद्धिशङ्कारहित एव सन्नित्यर्थः । सर्वत्र सर्वेषु विषयेषु सुसाधेषु दुस्साधेषु वेति भावः । कालोचितां तत्कालविधेयामित्यर्थः। प्रक्रियां व्यापारं विदधे करोमि । विपूर्वाद्धातेर्लट्यात्मनेपदोत्त-मपुरुषैकवचनम् । नीतिनैपुण्येन निश्चितफलान्येव महान्त्यपि स-र्वाणि कार्याणि यथाकालमहमनुतिष्ठामीत्यर्थः । मां प्रकृत्यैव स्वभा-वेनैव न तु शिक्षावशेनेत्यर्थः । दुष्कर्मसु विषये लज्जिततमं अति-शयेन लज्जितं अवगच्छ जानीहि । तस्मादिति शेषः । हे ! शुभ-लोचने ! सुनयने ! जानकि ! मयि आशु अविलम्बितं यथातथा अतिचतुरामत्यन्तपेशलां दृग्धारां दृष्टिधोरणीं आधेहि निधेहि । अतिव्यामोहिकया दृशा क्षिप्रं मां पश्येत्यर्थः । सीता प्रत्याह— र इत्यादि बुधा इत्यन्तम् । रे ! दुरात्मन् ! ते तव वाक् पा-पेन पातकेन समाविला सङ्कलुषा—'कलुषोऽनच्छ आविलः' इत्य मरः । अतिदूषितेति यावत् । इति बुधाः कथं न विद्युः न जानीयुः जानीयुरेवेत्यर्थः । गूढार्थस्तु—रे ! पाप ! पापिन् ! मत्व-र्थीयाच्प्रत्ययान्तस्य पापशब्दस्य सम्बुद्धिः । 'त्रिषु द्रव्ये पाप-पुण्यसुखादि च' इत्यमरः । दुरात्मन् ! दुष्ट ! ते तव वाक् सर्व-त्राहमित्यादिः पूर्वोक्ता विला विगतलकारा सती, समा मकारसहिता उभयत्र बहुव्रीहिः । लकारस्थानापन्नमकारेत्यर्थः । इति बुधाः कथं न विद्युः । एवञ्च—"सर्वत्राहमभाकि एव विदधे कामोचि-तां प्रक्रियां दुष्कर्मस्ववगच्छ मज्जिततमं सीते प्रकृत्यैव माम् । दृग्धारां शुभमोचनेऽतिचतुरामाधेहि मय्याशु" इत्येव त्वयोक्तमिति

जानन्तीत्यर्थः । हे! सीते! अभीकः कामुकः—'कम्रः कामयिताऽभीकः'' इत्यमरः । अहं सर्वत्र सर्वासु गम्यास्वगम्यासु चेति भावः। कामस्य कामविकारस्य उचितां योग्यामेव प्रक्रियां चेष्टां विदधे करोमि । मां प्रकृत्यैव कत्रर्चा स्वभावेनैव । न तु संसर्गीद्विजन्येनागन्तुकधर्मेणेत्यर्थः । दुष्कर्मसु दुर्व्यापारेषु मज्जिततमं अतिशयेन मज्जितम् । मज्जतेर्ण्यन्तात्कर्मणि क्तः ततोतिशायने तमप्। गाढं प्रवर्तितमित्यर्थः । अवगच्छ शुभस्य मङ्गलस्य । मदीयस्येत्यार्थिकोऽर्थः । मोचने त्याजने अतिचतुरामत्यन्तदक्षाम् । 'दक्षे तु चतुरपेशलपटवः' इत्यमरः । कोपकलुषत्वादिति भावः। दृग्धारां आशु मयि आधेहि । यथा कामी दुरात्माऽहं क्षिप्रमेव नश्येयं तथा मां पश्येत्यर्थः । प्रतिदत्ताक्षरं चित्रम् ॥ ६० ॥

**कामारात्युपलालनारसविदस्म्येकोऽहमुर्वीसुते**
**दोर्दर्पोऽतितरां प्रकाशमित इत्याजिक्षितौ विद्धि मे॥**
**अङ्कस्कस्स्ववधूजनं कलयते कामोचितालङ्क्रियं श्रा-**
**व्यस्स्वस्तव एष तेऽपि कुमते कालोपसम्प्रापितः ॥**

कामारातीति ॥ रावणस्सीतामाह—कामारातीत्याद्यलङ्क्रियमित्यन्तम् । हे! उर्वीसुते! एकः अहं अहमेवेत्यर्थः । कामारातेः शिवस्य कर्तुः या उपलालना सस्नेहमादरणं तस्यां यो रसः स्वादः तं वेत्तीति कामारात्युपलालनारसवित् अस्मि । मामिव न कमपीश्वरः प्रेम्णोपलालयतीत्यर्थः । स्वस्य तद्भक्ताग्रगण्यत्वा-

दिति भावः । आजिक्षितौ युद्धभूमौ मे मम दोर्दर्पः भुजबल
वष्टम्भ इत्यर्थः । अतितरां प्रकाशं प्राकठ्यं इतः प्राप्तः इ
विद्धि जानीहि । मद्वत् कः पुमान् स्ववधूजनं निजकळत्रव
कामस्य इच्छाया उचिता अनुगुणा अलङ्क्रिया आभरणं यर
तथोक्तं कलयते करोति । अहमेक एव कळत्राणां इच्छानु
णाभरणोपकल्पनेन सन्तोषापादक इत्यर्थः । सीता प्रत्याह–
श्राव्य इत्यादि प्रासित इत्यन्तम् । रे! कुमते! दुर्बुद्धे! क
लस्य उपसम्प्रासितः उपसंप्राप्त्या हेतुना । तृतीयान्तात्तसिः
दुर्दैवयोगान्ममैवमत्र निरोधानुभवदुस्समयस्योपगमेनेत्यर्थः । एषः
र्वोक्तः ते तव स्वस्तवोपि आत्मश्लाघाऽपि । अपिशब्दोऽत्यन्त
गुप्सितत्वद्योतनार्थः । श्राव्यः श्रोतव्यः अभूदिति शेषः ।
द्वार्थस्तु—रे! कुमते! ते एषः स्वस्तवोऽपि । अर्थः पूर्ववत्
काघाः का इत्याकारकवर्णस्य लोपसम्प्रासितः लोपसम्प्राप्त्या
पूर्ववत्तसिः । श्राव्यः श्रोतुं योग्यः । अभिज्ञैरिति शेषः ।
वञ्च—"मारात्युपलालनारसविदस्यैकोऽहमुर्वीसुते दोर्दर्पोऽतितरां
शमित इत्याजिक्षितौ विद्धि मे मद्वत्कस्स्ववधूजनं कलयते मोः
तालङ्क्रियम्" इति वदसि चेच्छ्रोतुमर्हं तव वचो भवेदित्यर्थः
हे! उर्वीसुते! एकः अहं मारस्य कर्मणः अतिलालनाशामल
न्तादरणे । तृतीय एव परमः पुरुषार्थ इत्यासक्त्या तदुपसेव
यामित्यर्थः । यो रसः तं वेत्तीति तथोक्तः अस्मि । न
श्चिदप्यहमिवात्यन्तं कामलम्पट इत्यर्थः । आजिक्षितौ मे दोर्द

अतितरां प्रशमितः निर्वापित इत्यर्थः । रामेणेति शेषः । भविष्यतोऽप्यर्थस्य नैयत्यनिश्चयद्योतको भूतवद्व्यपदेशः इति विद्धि। मद्वत्कः स्ववधूजनं मोचिता त्याजिता अलङ्क्रिया यस्य तं तथोक्तं वैधव्यापादनेनेति भावः । कलयते करोति । च्यावितादक्षरं चित्रम् ॥ ६१ ॥

**तैस्तैस्स्वैश्चरितैस्सुदूरविधुतारात्युल्लसत्सद्यशाः सीते कोऽहमिवास्ति च त्रिभुवनेऽत्यन्तं कृताशो रणे । तापानाकलनेन च प्रमुदितो मद्वत्सदाऽतीव कोऽस्त्येवं स्वस्तवनं त्वया जडमते कर्तुं न तावत् क्षमम् ॥ ६२ ॥**

तैस्तैरिति ॥ रावणस्सीतामाह—तैस्तैरित्याद्यस्तीत्यन्तम् । हे! सीते! त्रिभुवने त्रिलोक्यां अहमिव स्वैः स्वकीयैः तैस्तैः कैलासोत्क्षेपणादिनान्यादृशैरित्यर्थः । चरितैः व्यापारैः हेतुभिः सुदूरं यथातथा विधूतं निर्धूतं अरातीनां शत्रूणां उल्लसत् प्रकाशमानं सद्यशः बाहुबलप्रयुक्तं येन तथोक्तः । रणे विषये अत्यन्तं यथातथा कृता आशा अतितृष्णा येन तथोक्तश्च कः अस्ति? न कोपि किं त्वहमेक एव तादृश इत्यर्थः । 'आशा दिगतितृष्णयोः' इति विश्वः । किञ्चेति चार्थः । मद्वत् मयातुल्यम् । क्रियाविशेषणमेतत् । अहमिवेत्यर्थः । तापस्य सन्तापस्य आध्यात्मिकादेः अनाकलनेन अत्यन्तापरिचयेन हेतुना । कलिः

कामधेनुः । सदा अतीव प्रमुदितः सन्तुष्टः कोस्ति? ईदृशश्चाहमेक एवेत्यर्थः । सीता प्रत्याह—एवमित्यादि क्षममित्यन्तम् । रे! जडमते! मन्दबुद्धे! एवं त्वया स्वस्तवनं आत्मश्लाघनं कर्तुं न तावत्क्षमं नैव युक्तं—"यावत्तावच्च साकल्येऽवधौ मानावधारणे । क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिपु" इति चामरः । गूढार्थस्तु—रे! जडमते! त्वया एवं तैस्तैरित्याद्युक्तिप्रकारेणेत्यर्थः । तावत् ता इत्याकारकवर्णवत् । तावदित्यत्र ता अस्मिन्नस्तीति विग्रहः । 'तदस्य' इत्यादिना मतुप् । 'मतोर्वः' इति मकारस्य वकारादेशः । स्वस्तवनं कर्तुं न क्षमम् । एवञ्च—तावर्णं परित्यज्य "तैस्तैस्स्वैश्चरितैस्सुदूरविधुरात्युल्लसत्सद्यशास्सीते कोऽहमिवास्ति च त्रिभुवनेऽत्यन्तं कृशो रणे पानाकलनेन च प्रमुदितो मद्वत्सदाऽतीव कोऽस्ति" इत्येव त्वया वक्तुं युक्तमित्यर्थः । हे! सीते! त्रिभुवने अहमिव स्वैः तैस्तैः परदारचौर्यादिभिरित्यर्थः । चरितैः सुदूरविधुरं अत्यन्तविश्लिष्टं उल्लसत्सद्यशः प्रकाशमानसुकीर्तिः यस्मात्तथोक्तः । 'विधुरौ कष्टविश्लिष्टौ' इति 'नानार्थरत्नमाला । रणे अत्यन्तं कृशश्च कोऽस्ति अहमेक एव तादृश इत्यर्थः । कृश इत्यनेन निरुत्साहत्वमूलभूतमतिभीरुत्वं द्योत्यते । मद्वत् सदा अतीव पानस्य मद्यपानस्य आकलनेन सेवनेन प्रमुदितश्च कोऽस्ति तादृशश्चाहमेवेत्यर्थः । च्यावितात्क्षरं चित्रम् ॥ ६२ ॥

**पौरैरध्युषिता मुदा कुचरितं स्वप्नेऽप्यनभ्याश्रितैर्वैरिभ्योपकृतौ नितान्तनिपुणैर्योधैस्समभ्यावृता।**

**प्राप्य त्वां कलयेव भाति सुतरां सीते ममेयं पुरी
त्वद्वाङ्मूढ समीपतश्श्रवणयोर्निष्कासमेवार्हति ॥**

पौरैरिति ॥ रावणस्सीतामाह—पौरैरित्यादि पुरीत्यन्तम् । हे! सीते! स्वप्नेऽपि कुचरितं अनभ्याश्रितैः नित्यपरिशुद्धचरितैरित्यर्थः । पौरैः मुदा अध्युषिता अधिपूर्वाद्वसतेः कर्मणि क्तः । तथावैरिभ्यः अपकृतौ द्रोहे शत्रुनिग्रहे इत्यर्थः । अपपूर्वकस्य करोतेः द्रुह्यर्थकतया 'क्रुध द्रुह' इत्यादिना कोपविषयाणां वैरिणां संप्रदानत्वाच्चतुर्थी । नितान्तनिपुणैः अतिप्रवीणैः योधैः भटैः समभ्यावृता सम्यक्परिवृता मम इयं नगरी लङ्का उक्तरीत्या इष्टप्राप्त्यनिष्टनिवृत्तिसाधनाभ्यां सुजनसंसर्गभटगुप्तिभ्यामुपलक्षितत्वात्प्रागेव शोभमानेति भावः । त्वां प्राप्य सुतरां अवभाति मङ्गळदेवतायास्तव सन्निधानादतितरां शोभत इत्यर्थः । कलये जानामि । उक्त एव वाक्यार्थः कर्म । सीता प्रत्याह—त्वदित्याद्यर्हतीत्यन्तम् । रे! मूढ! त्वद्वाक् श्रवणयोः समीपतः समीपात् । पञ्चम्यास्तसिः । निष्कासमेव दूरतोऽपसारणमेव अर्हति । अत्यन्तमश्राव्या भवतीत्यर्थः । गूढार्थस्तु—रे! मूढ! त्वद्वाक् श्रवणयोः समीपतः समीपे । सप्तम्यास्तसिः । निष्का निर्गतककारा सती समेव सकारमेव अर्हति ककारस्थाने सकारमेवार्हतीत्यर्थः । एवञ्च—"पौरैरध्युषिता मुदा सुचरितं स्वप्नेऽप्यनभ्याश्रितैर्वैरिभ्योऽपसृतौ नितान्तनिपुणैर्योधैस्समभ्यावृता ॥ प्राप्य त्वां सलयेव भाति सुतरां सीते ममेयं पुरी" इत्येव त्वं वक्तुमर्हसीत्यर्थः । हे! सीते! स्वप्नेऽपि सुचरितं अनभ्याश्रितैः नित्यदुश्चरितैरित्यर्थः । पौरैः मुदा अध्यु-

षिता तथा वैरिभ्य इत्यपादानत्वात् पञ्चमी । अपसृतौ अपस
रणे दूरतः पलायन इत्यर्थः । नितान्तनिपुणैः योधैस्समभ्या
वृता ईदृशत्वादेव सूचितासन्नविनाशेति भावः । इयं मम पुरी त्व
प्राप्य सुतरां लयेन विनाशेन सह वर्तत इति तथोक्तेव प्राप्तवि
नाशेवेत्यथः । भाति पूर्वमाशङ्कितोऽस्य नगरस्य विनाशोऽद्य त्वद
नुषङ्गान्निश्चित एवास्तीत्यर्थः । प्रतिदत्ताक्षरं चित्रम् ॥ ६३ ॥

**सर्वानप्यवजानतो युधि रिपून्मद्वत्स किं रा
घवस्सद्यस्संशमयेदहं स इव किं सीतेऽस्म्यजात्यु
त्तमः । भूजातोत्सवभाजनं कलयितुं त्वं मां कि
माशङ्कसे पापिन् जारहितं तव प्रलपितं जानन्त्य
भिज्ञा न किम् ॥ ६४ ॥**

सर्वानिति ॥ रावणस्सीतामाह—सर्वानित्याद्याशङ्कस इत्यन्तम्
हे! सीते! स राघवः मद्वत् मयातुल्यं अहमिवेत्यर्थः । युधि अ
वजानतः अवमन्वानान् सर्वानपि रिपून् सद्यः अवमाननाक्षण ए
संशमयेत्किं? हन्तुं शक्नुयात्किमित्यर्थः । 'शकि लिङ्' इति लिङ्
'शमोऽदर्शने' इति दर्शनभिन्नार्थे मित्त्वादुपधाह्रस्वः । अहं राक्ष
सानां देवयोनित्वेन प्रबलत्वादुत्कृष्ट इति भावः । स इव मानुष
त्वाद्दुर्बलो राम इव जात्या उत्तमो न भवतीत्यजात्युत्तमः जा
त्याऽनुत्कृष्ट इत्यर्थः । अस्मि किं?

दर्शितैव श्रीमद्रामायणे भगवता वाल्मीकिना राक्षसोक्तिषु मानु

षजाते राक्षसजातितोऽपकर्षप्रतिपादनसरणिः—मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय । इत्यादिना । भूजाता अयोनिजत्वाज्जन्मनोत्कृष्टेत्यर्थः । त्वं मां जात्योत्कृष्टमिति भावः । उत्सवस्य भाजनं पात्रं कलयितुं परिग्रहेणानन्दयितुमित्यर्थः । किमाशङ्कसे? कुतो वितर्कयसि? । सीता प्रत्याह—पापिन्नित्यादि न किमित्यन्तम् । रे! पापिन्! अभिज्ञाः प्राज्ञाः तव प्रलपितं अनर्थकं वचनं जारेभ्यः हितं जारपुरुषाभिमतं 'चतुर्थी तदर्थ' इत्यादिना चतुर्थीसमासः । न जानन्ति किं जानन्त्येवेत्यर्थः । गूढार्थस्तु—पापिन्नभिज्ञास्तव प्रलपितं जारहितं जया जा इत्याकारकवर्णेन रहितं परित्यक्तं न जानन्ति किं? । एवञ्च—"सर्वानप्यवनतो युधि रिपून्मद्रुत्स किं राघवस्सद्यस्संशमयेदहं स इव किं सीतेऽस्मचत्युत्तमः भूतोत्सवभाजनं कलयितुं त्वं मां किमाशङ्कसे" इत्येव त्वयोक्तं जानन्तीत्यर्थः । हे! सीते! स राघवः मद्रुत् युधि सर्वान् रिपूनपि अवनतस्सन् कृतप्रणामस्सन्नित्यर्थः। सद्यः युध्योपक्रमक्षण एवेत्यर्थः ! संशमयेत्किं? शान्तवैरान्कुर्यात्किं? शरणागत्या प्रसादयेत्किमित्यर्थः । तत्र हेतुमाह—अहं स इव राम इव अत्युत्तमः अस्मि किं? नास्मीत्यर्थः । युक्त एवाधमस्य युधि शत्रून्प्रति प्रणाम इति भावः । त्वं मां भूतानां कुणपभुजां पिशाचभेदानां उत्सवस्य भुक्तिविशेषलाभप्रयुक्तस्य भाजनं पात्रं हेतुभूतमित्यर्थः । कलयितुं कर्तुं विनाशयितुमित्यर्थः। किमाशङ्कसे? कुतो विचारयसि? निर्विचारं विनाशनीयोऽभिसन्धिमात्रेण तवाहमित्यर्थः । च्यावितात्क्षरं चित्रम् ॥ ६४ ॥

**सीते ऽसौ नगरी विजृम्भितमहारक्षश्शुभाऽनामया शोभाकारहिताऽवरोधकरणात्स्यादेव तेऽलङ्कृता । नन्वेषोऽस्मि च भावनोपसरणायत्तेप्सितश्रीरहं रे रक्षोऽधम भावियोगत इयं निर्यातु वाङ्मुखात् ॥ ६५ ॥**

सीते इति ॥ रावणस्सीतामाह—सीते इत्याद्यहमित्यन्तम् । हे! सीते! विजृम्भितानि विशेषतः प्रवृत्तानि महान्ति च रक्षसां राक्षसानां शुभानि मङ्गळानि यस्यां सा तथोक्ता । न विद्यते आमयो यस्यां सा अनामया अरोगभूमिरित्यर्थः । 'रोगव्याधिगदामयाः' इत्यमरः । शोभा दीप्तिः आकारस्सन्निवेशसौष्ठवं तयोर्द्वन्द्वः । ताभ्यां हिता हृद्या असौ नगरी लङ्का ते तव अवरोधकरणात् अन्तःपुरनिर्माणात् । "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च" इत्यमरः । अलङ्कृता भूषिता स्यादेव । ईदृश्यां लङ्कायां यदि च तवान्तःपुरमेकं निर्मितं स्यात्तदाऽतीव शोभाऽस्यास्सम्पत्स्यत इत्यर्थः । एषोऽहं च चशब्दस्त्वर्थकः । एष इति स्वहस्तेनात्मनो निर्देशः । भावनया सङ्कल्पमात्रेण उपसृतौ समीपप्राप्तौ आयत्ता ईप्सितश्रीः इष्टार्थसम्पत् यस्य तथोक्तः । अस्मि ननु । ईदृशोऽपि मयि न कुतोऽनुरज्यस इति वाक्यशेषद्योतको ननुशब्दः । सीता प्रत्याह—र इत्यादि मुखादित्यन्तम् । रे! रक्षोऽधम! भावी भविष्यन् यो योगः का-

लकर्मणोऽसम्बन्धः तस्माद्धेतोः । सार्वविभक्तिकस्तसिः । भवितव्यतावशादित्यर्थः । इयं पूर्वोक्ता वाक् ते तव मुखात् निर्यातु निर्गच्छतु । सम्भावनायां लोट् । आसन्नविनाशस्य तव मुखादेवं दुरुक्तिनिर्गमनं सम्भावितमेवेत्यर्थः । गूढार्थस्तु—रे! रक्षोऽधम! इयं सीतेऽसावित्यादिः वाक् भावियोगतः भायाः भा इत्याकारकवर्णस्य वियोगं प्राप्येति । ल्यब्लोपे पञ्चमी, ततस्तसिः। ते तव मुखात् निर्यातु । एवञ्च—"सीतेऽसौ नगरी विजृम्भितमहा रक्षश्शुना मया शोकारहिताऽवरोधकरणात्स्यादेव तेऽलङ्कृता । नन्वेषोऽस्मि च वनोपसरणायत्तेप्सितश्रीरहम्" इत्येव भवान्प्रलपत्वित्यर्थः । हे! सीते! विजृम्भिताः महाः उत्सवाः यस्यां सा तथोक्ता । 'मह उद्धव उत्सवः' इत्यमरः । असौ नगरी लङ्का रक्षश्शुना राक्षसशुनकेन राक्षसेषु शुनकवदतिदूष्येणेत्यर्थः। उपमानोत्तरपदः कर्मधारयः । मया कर्त्रा ते तव अवरोधकरणात् उपरोधसम्पादनात् हेतोः अलं अत्यन्तं शोकारहिता शोकेन राक्षसीजनसम्बन्धिना रामलक्ष्मणकर्तृकसर्वराक्षसवधमूलकेनेति भावः । अरहिता परिपूर्णा सती कृता स्यादेव न तत्र संशय इत्यर्थः। एषोऽहं च वनोपसरणे काननप्राप्तौ विनशन इत्यर्थः । आयत्ता ईप्सितश्रीर्यस्य स तथोक्तः । अस्मि ननु अस्म्येव । क्यावितार्क्षरमिदं चित्रम् ॥ ६९ ॥

**सीते मङ्क्षु जयोः प्रतापदहने जाज्वल्यमाने तव प्राणेशस्स रणार्थिनोऽभिमुखतां मे प्राप्नुया-**

**द्वा न वा। मां प्राप्तस्स मनःप्रवृत्तिमुचितां कुर्यान्न वा रे पाप त्यज संशयो गत इहार्भ्र एवाप्स्यते ॥ ६६ ॥**

सीते इति ॥ रावणस्सीतामाह—सीते इत्यादि कुय त्यन्तम् । हे! सीते! मद्भुजयोः प्रतापदहने प्रतापाग्नौ ल्यमाने भृशं ज्वलति सति । ज्वलतेर्यङन्ताच्छटश्शानच् तव प्राणेशः रामः रणार्थिनः युद्धाभिलाषिणः मे मम खतां आभिमुख्यं प्राप्नुयाद्वा? उत न प्राप्नुयाद्वा? मत्प्रतापं ः बुद्ध्वा युद्धे प्रवर्तेत वा? तत्त्वत एव बुद्ध्वा पलायेत वेत मां प्राप्तः कथंचिन्ममाभिमुखत्वं गतोपीत्यर्थः । स राम द्भुतं उचितामेव वीरपुरुषयोग्यामेव मनःप्रवृत्तिं कुर्याद्वा? र्याद्वा? धैर्यादभियोद्धुमुद्युञ्जीत वा? भयाच्छरणागतिपक्षं म्बेत वेत्यर्थः । तस्य पलायनं शरणागतिपक्षाश्रयणं ममाभिमतं किं त्वभियोधनमेवेति भावः । रणार्थिन इति विशेषणोपादानात् । सीता प्रत्याह—र इत्याद्याप्स्यत ः रे! पाप! पापिन्! त्यज जहीहि संशयोपन्यसनमित्यार्थिन

> सप्राणां प्राणनाथो मां सखि सम्भावयेन्न वा ।
> मुञ्चमुञ्चाधुना प्रावृष्यप्यसौ प्रवसेत्कथम् ॥

इत्यत्र सकर्मकस्याप्यनिर्दिष्टकर्मणो मुञ्चतेरिवात्र पूर्ववा शयोपन्यसनकर्मकतायास्त्यजतेर्वक्तुमुचितत्वात् । इह त्वद

रामस्य त्वदभिमुखीभवने तावकयुद्धदुर्मदनिर्मूलने चेत्यर्थः। संशयः गतः अपास्तः अभिमतः त्वदभिमतः अर्थः विषयः पूर्वोक्तरूपः आप्स्यत एव असंशयं लप्स्यत इत्यर्थः। आप्नोतेः कर्मणि लृट्। गूढार्थस्तु—रे! पाप! सं सकारं त्यज इह सकारस्थान इत्यर्थः। शयोगतः शस्य शकारस्य योगतः योगेन। सार्वविभक्तिकस्तसिः। अभीष्ट एव साधुजनाभिमत एव अर्थः अभिधेयः आप्स्यते लप्स्यते। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। एवञ्च—"शीते मद्भुजयोः प्रतापदहने जाज्वल्यमाने तव प्राणेशश्शरणार्थिनोऽभिमुखतां मे प्राप्नुयाद्वा न वा। मां प्रासश्शमनः प्रवृत्तिमुचितां द्रागेव कुर्यान्न वा" इति त्वयोक्तं चेदभिमतार्थं भवेदित्यर्थः। हे! जानकि! प्राकरणिकीयं सम्बुद्धिः। जाज्वल्यमाने भृशं ज्वलति रामदर्शनात्पूर्वमिति भावः। मद्भुजयोः प्रतापदहने शीते शीतळे सति निर्वाणे सतीत्यर्थः। रामदर्शनक्षण एवेति भावः। स तव प्राणेशः रामः शरणं रक्षणं अर्थयते याचत इति शरणार्थी तस्य मां रक्षेति याचमानस्येत्यर्थः। "शरणं स्याद्रक्षितरि रक्षणे मन्दिरे वधे" इति नानार्थरत्नमाला। मे मम श्रीरामाभिमुख्यविषयतासम्बन्धविवक्षया षष्ठी। मयीत्यर्थः। अभिमुखतां प्रसन्नतां प्राप्नुयाद्वा? न वा? वध्यस्यापि मम रक्षणेन 'सकृदेव प्रपन्नाय' इति वचनोक्तां स्वस्य प्रपन्नाभयदानप्रतिज्ञामेव सफलयेद्वा? 'जीवत्यस्मिन् दुरात्मनि जगदखिलमुपप्लुतं भवेदतोऽयमवश्यं हन्तव्य

एव' इति मां हन्यादेव वेत्यर्थः । एवमुपन्यस्तयोः पक्षयोस्स-कललोकाभिमतत्वाद्द्वितीयस्मिन्नेव प्रबलतां निर्धार्याह—मां प्राप्त इ-त्यादि । मां प्राप्तः रामेणावश्यं हनिष्यमाणं मां स्वपुरं नेतु-मागत इत्यर्थः । शमनः यमः—'शमनो यमराड्यमः' इत्यमरः। उचितां स्वाधिकारयोग्यामित्यर्थः । प्रवृत्तिं जीवाकर्षणरूपं व्या-पारमित्यर्थः । द्रागेव अविलम्बितमेव कुर्याद्वा? न वा? 'क-थमिममहं महापापिनं स्पृशेयम्' इति मां स्प्रष्टुमीषद्विलम्बेत वे-त्यर्थः । प्रतिदत्ताक्षरं चित्रम् ॥ ६६ ॥

**रामायातिपटुत्वमेव समरे व्यक्तं भवेन्मामकं**
**राकेशोपमितं ममैव भुवने जानीहि सीते यशः ।**
**राजीवेऽपि गतस्पृहस्तव मुखं सानन्दमालोकये**
**रावणं विरहय्य तत्पुनरपि ब्रूहि क्षपाटाधम ॥६७॥**

रामायेति ॥ रावणस्सीतामाह—रामायेत्यादिभिः त्रिभिः पादैः। हे! सीते! समरे मामकं अतिपटुत्वमेव रामाय व्यक्तं भवेत् । युद्धे रामो न कदाऽपि मामसमर्थं जानीयादित्यर्थः । भुवने ममैव यशः राकेशोपमितं चन्द्रसदृशं जानीहि राजीवेऽपि कमलेऽपि गतस्पृहः निरपेक्षस्सन् सानन्दं यथातथा तव मुखं आलोकये पश्या-मि । तव मुखं पश्यतो मम कमलमप्यनादरणीयमेव भवती-त्यर्थः । ततोपि सुन्दरं तव मुखमिति भावः । सीता प्रत्याह— रावणमित्यादिना चरणेनैकेन । रे! क्षपाटाधम! राक्षसापशद!

रावणं पादत्रयेऽपि रा इत्यानुपूर्वीकं प्रथमवर्णमित्यर्थः । विरहय्य त्यक्त्वा तत् त्वद्वचनं पुनरपि ब्रूहि । एवञ्च—"मायाऽतिपटुत्वमेव समरे व्यक्तं भवेन्मामकं केशोपमितं ममैव भुवने जानीहि सीतेऽयशः जीवेऽपि गतस्पृहस्तव मुखं सानन्दमालोकये" इति ब्रूहीत्यर्थः । हे! सीते! समरे मामकं मत्सम्बन्धि मायाऽतिपटुत्वमेव मायाविषयकमतिशयितं सामर्थ्यमेव व्यक्तं भवेत्. युद्धेऽहं मायाबलेनैव जीवामि न तु बाहुबलेनेत्यर्थः । भुवने ममैव केशैः उपमितं अतिनीलमित्यर्थः । अयशः अकीर्तिम् । अस्मिन्पक्षे सीतेयश इति मूले सीते अयश इति पदच्छेदो बोध्यः। जानीहि जीवेऽपि प्राणधारणेऽपि—'जीवोऽसुधारणम्' इत्यमरः । गतस्पृहस्सन् सानन्दं यथातथा तव मुखं आलोकये । एवमुद्धृत्तोऽहं न सर्वथा जीविष्यामीति निश्चिन्वन्नेव त्वन्मुखदर्शनानन्दमनुभवामीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ६७ ॥

**अतीव गुणवान्पुमान्क इह मद्वदुर्वीसुते शशीव समवेक्षणाद्धृदि कृतप्रहर्षोऽस्म्यहम् ॥ महारणमहोत्सवार्थ्यहमिवापरः कः पुमान्पुनश्च खलु तद्वचो वद विना द्वितीयाक्षरम् ॥ ६८ ॥**

अतीवेति ॥ रावणस्सतीमाह—अतीवेत्यादिभिस्त्रिभिश्चरणैः ॥ हे! उर्वीसुते! इह अस्मिन् जगति मद्वत् मयातुल्यं यथातथा

अतीव गुणवान्पुमान् कः? अस्तीत्यध्याह्रियते । अहं शः
चन्द्र इव समवेक्षणात् दर्शनात् हृदि द्रष्टॄणां मनसि कृतः प्र
र्षो येन तथोक्तः अस्मि । अहमिव महांश्चासौ रणश्च स ए
महोत्सवः तं अर्थयते ताच्छील्येनेति तथोक्तः । अपरः पुमा
कः! अस्तीति शेषः । अहमेक एव तादृश इत्यर्थः । सी
प्रत्याह—पुनश्चेत्यादिना चरणेनैकेन । रे! खल! द्वितीयाक्ष
विना तत् पूर्वोक्तं वचः पुनश्च वद । एवञ्च—"अवगुणवा
पुमान् क इह मद्वदुर्वीसुते शवसमवेक्षणाद्धृदि कृतप्रहर्षोऽस्म्य
मरणमहोत्सवार्थ्यहमिवापरः कः पुमान्" इति वदेत्यर्थः ॥ हे
उर्वीसुते! मद्वत् अवगुणवान् पुमान् इह अस्मिन् जगति कः
अस्तीति शेषः । न कोऽप्यहमिवावगुणवानित्यर्थः । अहं शवसम
वेक्षणात् कुणपदर्शनात् हृदि स्वमनसि कृतः धृतः प्रहर्षो ये
तथोक्तः अस्मि । कुणपस्य भक्ष्यत्वाद्भक्ष्यदर्शनेन भक्षयितुर्हर्षोद
यस्यावश्यकत्वादिति भावः । अहमिव मरणमेव महोत्सवः
अर्थयते ताच्छील्येनेति तथोक्तः अपरः पुमान् कः? अस्तीा
शेषः । अहमेक एव मरणमुत्सवं बुद्ध्वाऽभ्यर्थयमान इत्यर्थः
पृथ्वीवृत्तम् ॥ ६८ ॥

**अनपायवानहमिवास्ति कोऽपरो निरपायमेव**
**पदमस्य विद्धि मे । उपकारतोऽधिकमुदे सतामहं**
**वितृतीयवर्णमभिधेहि रे पुनः ॥ ६९ ॥**

अनपायेति ॥ रावणस्सीतामाह—अनपायेत्यादिभिस्त्रिभिश्चरणैः । हे! सीते! इत्यध्याह्रियते प्रकरणात् । अहमिव अनपायवान् अपायवतोऽन्यः विनाशरहित इत्यर्थः । अपरः कोऽस्ति? न कोऽपीत्यर्थः । अस्येति हस्तेन आत्मनो निर्देशः । मे मम पदं स्थानं लङ्कामित्यर्थः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । निरपायमेव निर्विनाशमेव विद्धि जानीहि अहं उपकारतः उपकारेण । तृतीयान्तात्तसिः । सतां साधूनां अधिकमुदे भूयस्सन्तोषाय भवामीति शेषः । सीता प्रत्याह—वितृतीयेत्यादिनैकेन चरणेन । रे! नीच! वितृतीयवर्णं विगततृतीयाक्षरं यथातथा पुनः अभिधेहि वद । पूर्वोक्तं चरणत्रयमिति कर्मार्थादेव गम्यते । एवञ्च—"अनयवानहमिवास्ति कोऽपरो निरयमेव पदमस्य विद्धि मे उपरतोऽधिकमुदे सतामहम्" इति वदेत्यर्थः । हे! सीते! अहमिव अनयवान् नीतिविधुरः अपरः कोऽस्ति? अस्य मे निरयमेव नरकमेव पदं स्थानं विद्धि । 'स्यान्नारकस्तु नरको निरयः' इत्यमरः । तथापापवत्तमत्वात्स्वरयेतिं भावः । अहं उपरतस्सन् मृतस्सन् सतां अधिकमुदे भविष्यामीति शेषः । सज्जनाशंसितवधोऽहं दुरात्मेति भावः । मञ्जुभाषिणीवृत्तम् । 'सजसा जगौ भवति मञ्जुभाषिणी' इति तल्लक्षणात् ॥ ६९ ॥

**मद्वत्पावनशीलतामुपगतः कोऽप्यस्ति नोर्वीसुते श्रेयो लोकपवन्ममेति कलये त्वत्प्राप्तितस्सा-**

**म्प्रतम् । क्षिप्रं प्रेरित एव तेऽभिमतसंसिद्धिं विद-ध्यामहं त्रिष्वप्यङ्घ्रिपु तुर्यवर्णरहितं रे जल्प ते जल्पितम् ॥ ७० ॥**

रावणस्सीतामाह—मद्वदित्यादिभिस्त्रिभिः पादैः ॥ हे! उर्वीसुते! मद्वत् पावनं शीलं यस्य तस्य भावस्तत्ता तामुपगतः कोऽपि नास्ति। साम्प्रतं त्वत्प्राप्तितः त्वल्लाभेन । आद्यादित्वात्तृतीयान्तात्तसिः । मम श्रेयः लोकपवत् लोकपालानामिव भवतीति शेषः । 'तत्र तस्येव' इति वतिप्रत्ययः । इति कलये जानामि । अहं प्रेरितस्सन् स्वाभिमतेऽर्थे त्वया प्रचोदितस्सन्नित्यर्थः । क्षिप्रमेव ते तव अभिमतसंसिद्धिं इष्टार्थसंसिद्धिं विदध्यां कुर्याम् ॥ सीता प्रत्याह—त्रिष्वित्यादिना चरणेनैकेन । रे! नीच! त्रिष्वप्यङ्घ्रिषु तुर्यवर्णरहितं चतुर्थाक्षरविहीनं यथातथा ते तव जल्पितं जल्प। एवञ्च—"मद्वत्पानशीलतामुपगतः कोऽप्यस्ति नोर्वीसुते श्रेयो लोपवन्ममेति कलये त्वत्प्राप्तितस्साम्प्रतं क्षिप्रं प्रेत एव तेऽभि-मतसंसिद्धिं विदध्यामहम्" इति वदेत्यर्थः । हे! उर्वीसुते! मद्वत् पानं शीलं यस्य तस्य भावस्तत्ता तां उपगतः मद्यपा-नमदोन्मत्त इत्यर्थः । कोऽपि नास्ति साम्प्रतं त्वत्प्राप्तितः मम-श्रेयः लोपवत् विच्छिन्नं इति कलये जानामि । अहं क्षिप्रं प्रेत एव मृत एव सन् 'परेतप्रेतसंस्थिताः । मृतप्रमीतौ' इत्य-मरः । ते तव अभिमतस्य श्रीरामसमाश्रयणरूपेष्टार्थस्य संसिद्धिं विदध्याम् । शार्दूलविक्रीडितम् ॥ ७० ॥

**काकुत्स्थः कृशतान्त एव भविता युद्धे ममोर्वीसुते तच्छौर्यं महिमप्रणाशजनितामेव प्रथामेष्यति । तत्कीर्तिर्विकला सहासमुखतां कुर्याद्बुधानां ततो रे रक्षोऽधम पञ्चमाक्षरपरित्यग्जल्प तज्जल्पितम् ॥ ७१ ॥**

काकुत्स्थ इति ॥ रावणस्सीतामाह—काकुत्स्थ इत्यादिभिस्त्रिभिश्चरणैः । हे! उर्वीसुते! मम युद्धे काकुत्स्थः कृशतान्त एव कृशश्चासौ तान्तश्चेति विग्रहः । परिक्षामः प्रग्लानश्चैवेत्यर्थः । भविता । भवतेर्लुट् । तस्य रामस्य शौर्यं तच्छौर्यं महिम्नः महत्वस्य जामदग्न्यविजयादिना समार्जितस्येति भावः । प्रणाशेन जनितामेव प्रथां दुष्प्रथामित्यर्थः ॥ एष्यति. प्राप्स्यति । ततः अनन्तरं तस्य रामस्य कीर्तिः तत्कीर्तिः विकला सती नष्टा सती. बुधानां विदुषां हासेन सह वर्तत इति तथोक्तं मुखं येषां तेषां भावस्तत्ता तां कुर्यात् । सीता प्रत्याह—रे इत्यादिना चरणेनैकेन । रे! नीच! पञ्चमं अक्षरं परित्यजतीति पञ्चमाक्षरपरित्यक् सत् तत् पूर्वोक्तं जल्पितं वचनम् । भावे क्तः । जल्प। एवञ्च—"काकुत्स्थः कृतान्त एव भविता युद्धे ममोर्वीसुते तच्छौर्यं मम प्रणाशजनितामेव प्रथामेष्यति तत्कीर्तिर्विलासहासमुखतां कुर्याद्बुधानां ततः" इति वदेत्यर्थः ॥ हे! उर्विसुते! काकुत्स्थः युद्धे मम कृतान्त एव यम एव भविता । स मां हन्तेत्यत्रा-

संशयमित्यर्थः । तच्छौर्यं मम प्रणाशजनितामेव प्रथामेष्या
मद्वधेनैव रामस्य शौर्यं प्रथिष्यत इत्यर्थः । ततः मद्वधेन र
शौर्यप्रथावाप्त्यनन्तरमित्यर्थः । तत्कीर्तिः बुधानां देवानां वि
न यो हासः सः मुखे येषां तेषां भावस्तत्ता तां कुर्यात् ।
रावणवधात्पूर्वमिन्द्रादीनां निष्परितोषतया म्लानमुखत्वं तेन रा
पह्नुतत्वं च व्यज्यत इति वस्तुना वस्तुध्वनिः । वृत्तं पूर्वः

**आर्षाचारप्रशमिततमक्षात्रतेजाः पति**
**राज्यभ्रंशस्सुखरहिततामेव तस्य व्यनक्ति ।**
**क्षिप्रं मम रणसुखं स्यात्कदेत्युत्सुकोऽस्मि ब्रूहि**
**पुनरपि विना षष्ठवर्णं दुरात्मन् ॥ ७२ ॥**

आर्षाचारेति ॥ रावणस्सीतामाह—आर्षेत्यादिभिस्त्रिभिः प
हे! सीते! अध्याहार्यमेतत् । ते पतिः रामः आर्षेण ऋषि
न्धिना आचारेण कायक्लेशरूपेण प्रशमिततमं अतिशयेन
मितं क्षात्रं क्षत्रसम्बन्धि तेजो यस्य स तथोक्तः । अस्तीति
राज्यभ्रंशः तस्य रामस्य सुखरहिततामेव व्यनक्ति प्रकटय
राज्यभ्रष्टत्वात्स निस्सुख इति स्पष्टं ज्ञायत इत्यर्थः । तेन र
सह मम रणसुखं क्षिप्रं कदा स्यात् इति उत्सुकः विलम्ब
इत्यर्थः । 'कालाक्षमत्वमौत्सुक्यम्' इत्युक्तेः । अस्मि—निर
स्कं परिक्लिष्टं च तं सुजयमवगम्य तेन सह सलीलमभियोद्धुं त
तोऽस्मीत्यर्थः । सीता प्रत्याह—ब्रूहीत्यादिना चरणेनैकेन ।

दुरात्मन्! षष्ठवर्णं विना इदं आर्षेत्यादि वचनं पुनरपि ब्रूहि ॥ एवञ्च—"आर्षाचारप्रमिततमक्षात्रतेजाः पतिस्ते राज्यभ्रंशस्सुराहिततामेव तस्य व्यनक्ति तेन क्षिप्रं मरणसुखं स्यात्कदेत्युत्सुकोऽस्मि" इति वदेत्यर्थः । हे! सीते! ते पतिः आर्षाचारेण हेतुना तपोरूपेणेति भावः । प्रमिततमं प्रकर्षवत्तया विदिततमं क्षात्रं तेजो यस्य स तथोक्तः अस्ति । तस्य राज्यभ्रंशः सुरेभ्यो हितस्सुरहितः । 'चतुर्थी तदर्थ' इत्यादिना चतुर्थीसमासः । तस्य भावस्तत्ता तामेव व्यनक्ति रामप्रवासस्य राक्षसवधार्थकतया देवतेष्टार्थसम्पादकत्वं स्पष्टमेवावगम्यत इत्यर्थः । तेन रामेण मरणसुखं ममेत्यर्थात्सिद्ध्यति । क्षिप्रं कदा स्यात् इत्युत्सुकोऽस्मि ॥ मन्दाक्रान्तावृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तौ गुरू चेत्' इति लक्षणात् ॥ ७२ ॥

**रामस्सीते विकलसदभिप्रीतिभारो भवत्यां युध्युद्भावप्रहसिततमानेव कुर्यात्स वीरान् । नाथस्तेऽसावननुगुण इत्येव जानीहि नूनं षष्ठं वर्णं विजहदथवा सप्तमं जल्प पापिन् ॥ ७३ ॥**

राम इति ॥ रावणस्सीतामाह—राम इत्यादिभिस्त्रिभिश्चरणैः॥ हे! सीते! रामः भवत्यां त्वयि विषये विकलः नष्टः सदभिप्रीतिभारः स्वनुरागातिशयो यस्य तथोक्तः । अस्तीति शेषः ।

अतस्तव तस्मिन्ननुरागोऽतीव विरस इति भावः । एकनिष्ठानुरागस्य रसाभासत्वात् विरसत्वं बोध्यम् । तदुक्तम्—

एकत्रैवानुरागश्चेत् तिर्यङ्म्लेच्छगतोऽपि वा ।
योषितो बहुसक्तिश्चेत् रसाभासस्त्रिधा मतः ॥

इति । स रामः युधि युद्धे वीरान् उद्राव उच्चैर्घोषं यथातथा प्रहसिततमानिव अतिशयेन हासकर्तृनेव । कर्तरि क्तप्रत्ययान्तात् प्रपूर्वाद्धसतेरतिशायनेऽर्थे तमप्प्रत्ययः । कुर्यात् । युधि वीरास्सर्वेऽप्यतिभीरुं राममवलोक्य कथमयमेवंविधो निर्लज्जं आहवमवतीर्णः इयुच्चैर्घोषेण प्रहसेयुरित्यर्थः । असौ नाथः ते तव अननुगुण इत्येव अनुरूपगुणो न भवतीत्येव नूनं निश्चितं यथातथा जानीहि। सीता प्रत्याह—षष्ठमित्यादिना चरणेनैकेन । रे! पापिन्! षष्ठं वर्णं अथवा सप्तमं वर्णं विजहत् त्यजन् सन् । जहातेश्शतृप्रत्ययः । 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । जल्प । राम इत्यादिचरणत्रयं आर्थिकं कर्म । एवं च—षष्ठवर्णविरहेण—"रामस्सीते विलसदभिप्रीतिभारो भवत्यां युध्युद्रवप्रसिततमानिव कुर्यात्सवीरान् नाथस्तेऽसावनुगुण इत्येव जानीहि नूनम्" इति ॥ सप्तमवर्णविरहेण—"रामस्सीते विलसदभिप्रीतिभारो भवत्यां युध्युद्रावप्रहततमानेव कुर्यात्स वीरान् नाथस्तेऽसावनगुण इत्येव जानीहि नूनम्" इति वा वदेत्यर्थः । षष्ठवर्णविरहे—हे! सीते! रामः भवत्यां विषये विलसन् अभिप्रीतिभारो यस्य तथोक्तः । इति भिन्नं वा-

कथम् । सः रामः युधि वीरान् उद्द्रावे पलायने प्रसिततमानिव अतिशयेनासक्तानिव कुर्यात् । 'प्रद्रावोद्द्रावसंद्रावविद्रावा विद्रवो द्रवः । अपक्रमोऽपयानं च' इति, 'तत्परे प्रसितासक्तौ' इति चामरः । असौ नाथः ते तव अनुगुण इत्येव नूनं जानीहि । सप्तमवर्णविरहे—हे! सीते! रामः भवत्यां विषये विकसन् अभिश्रीतिभारो यस्य तथोक्तः । सः रामः युधि वीरान् उद्ग्रैः बाणविशेषैः अवप्रहततमान् अतिशयेन अवप्रहतानेव कुर्यात् । अव प्र इत्युपसर्गद्वयपूर्वकाद्धन्तेः कर्मणि क्तः । ततोऽतिशायनेऽर्थे तमप् । 'उद्ग्रः पन्नगभेदे च यादोभेदेषुभेदयोः' इति निघण्टुसारे । असौ ते नाथः रामः अगुणः गुणहीनः न भवतीत्यनगुणः गुणवानित्येव नूनं जानीहि । वृत्तं पूर्ववत् ॥ ७३ ॥

**शौर्यं भूतनये सदाऽमरभयोन्नेयं न किं मामकं कातान्तीं नगरीं निरोधनवशान्नेष्येऽहमात्मीयताम् । त्वद्भर्तुर्युधि मां विराजितमवेह्युद्यत्तमेनौजसा जल्पेदं पुनरष्टमाक्षरपरित्यक्तं क्षपाटाधम ॥ ७४ ॥**

शौर्यमिति ॥ रावणस्सीतामाह—शौर्यमित्यादिभिस्त्रिभिः पादैः । हे! भूतनये! मामकं मत्संबन्धि शौर्यं सदा सर्वदा अमराणां इन्द्रादीनां भयेन त्रासरूपेण लिङ्गेन उन्नेयं अनुमेयं न किम्? अमराणां भयादेव शूरोऽयमित्यहं वेदितव्योऽस्मीत्यर्थः । अहं निरोधनस्य अवस्कन्दनस्य वशात् आयत्तत्वात् कातान्तीं यम-

सम्बन्धिनीं नगरीं आत्मीयतां स्वीयतां नेष्ये । संयमिनीम-
प्यवस्कन्दनेनात्मसात्कर्तुमहं शक्तोऽस्मीत्यर्थः । तस्मादिति शेषः ।
त्वद्भर्तुः रामस्य युधि युद्धे मां उद्यत्तमेन अतिशयादुज्जृम्भमाणेन
ओजसा विराजितं अवेहि । एवञ्च—युध्यहमेव रामं विजेष्य
इत्यर्थः । सीता प्रत्याह—जल्पेदमित्यादिना चरणेनैकेन । रे!
क्षपाटाधम! इदं शौर्यमित्यादि पूर्वोक्तपादत्रयं अष्टमाक्षरपरित्यक्तं
यथातथा पुनर्जल्प । एवञ्च—“शौर्यं भूतनये समरभयोन्नेयं न
किं मामकं कातान्तीं नगरीं निधनवशान्नेष्येऽहमात्मीयतां
त्वद्भर्तुर्युधि मां विजितमवेहच्युद्यत्तमेनौजसा” इति वदेत्यर्थः । हे!
भूतनये! मामकं शौर्यं समरभयेन रामलक्ष्मणयोरसन्निधौ त्वदप-
हरणादेव सुज्ञातेनेति भावः । उन्नेयं न किं? समरभीरुत्वादेव
मामशूरं न जानासि किमित्यर्थः । अहं निधनवशात् कातान्तीं
नगरीं आत्मीयतां नेष्ये । क्षिप्रमेव मरणमनुभूय यमपुरपौरेष्वे-
कतमो भविष्यामीत्यर्थः । मां युधि त्वद्भर्तुस्सम्बान्धिना उद्यत्तमेनौजसा
विजितमवेहि । सर्वथा युधि रामो मां विजेष्यत इति जानी-
हीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ७४ ॥

**काकुत्स्थोऽवनिपुत्रि कोणपवशो युद्धे यदा स्या-
त्तदा वज्रश्रीर्जयजातमोदभरिता स्यादेव सद्यो
मम । मद्वत्संयति नैव वीक्षितमुखोल्लासो भवेद्रा-
घवः पापिन्निर्नवमाक्षरं पुनरिदं जल्प त्वदुक्तं वचः**

काकुत्स्थ इति ॥ रावणस्सीतामाह—काकुत्स्थ इत्यादिभिस्त्रिभिश्चरणैः । हे! अवनिपुत्रि! काकुत्स्थः युद्धे यदा कोणपानां राक्षसानां वशः आयत्तः स्यात् तदा मम वक्त्रश्रीः मुखकान्तिः सद्य एव जयजातेन विजयसम्भूतेन मोदेन हर्षेण भरिता स्यात् संयति युद्धे राघवः मद्वत् वीक्षितः दृष्टः मुखोल्लासो यस्य तथोक्तः न भवेदेव । सीता प्रत्याह—पापिन्नित्यादिना चरणेनैकेन । रे! पापिन्! त्वदुक्तं इदं वचः निर्गतं नवमाक्षरं यस्मिन्कर्मणि तद्यथातथा पुनः जल्प । निर्नवमाक्षरं सदिति वचस उत्तरविशेषणं वा बोध्यम् । तदा तु निर्गतं नवमाक्षरं यस्मात्तदिति विग्रहः । एवञ्च—"काकुत्स्थोऽवनिपुत्रि कोपवशो युद्धे यदा स्यात्तदा वक्त्रश्रीर्जयजा तमोभरिता स्यादेव सद्यो मम मद्वत्संयति नैव वीतमुखोल्लासो भवेद्राघवः" इति वदेत्यर्थः । हे! अवनिपुत्रि! काकुत्स्थः युद्धे यदा कोपवशः कोपाधीनः क्रुद्ध इति यावत् । स्यात् तदा जयजा रामकोपात्पूर्वं जयसम्भूता मम वक्त्रश्रीः सद्य एव तमोभरिता अन्धकारावृता स्यात्। संयति राघवः मद्वत् वीतः अपगतः मुखोल्लासो यस्य तथोक्तः न भवेदेव । वृत्तं पूर्ववत् ॥ ७५ ॥

**इत्यूनां षष्टिमेकेन पद्यानि पवनात्मजः॥ अपि रामाय विदुषे विवृण्वन्नर्थतोऽब्रवीत् ॥ ७६ ॥**

इतीति ॥ पवनात्मजः इति प्रागुक्तरीत्या एकेन ऊनां षष्टिं एकोनषष्टिसङ्ख्यानीत्यर्थः । पद्यानि विदुषेऽपि स्वत एवार्थं जान-

तेऽपि रामाय अर्थतः विवृण्वन् व्याख्यानरीत्याऽर्थं चोपपादय-न्नित्यर्थः । सार्वविभक्तिकस्तसिः । प्रत्युक्तिचातुर्यजनितहर्षपारवश्या-दिति भावः । अब्रवीत् ॥ ७६ ॥

**पद्यान्युक्तिमयानि तान्यपि रिपोः प्रत्युक्तियोगादतिस्वादून्यादरतोऽनिलात्मजमुखाच्छ्रुत्वाऽपि संतुष्यतः ॥ तां देवीं विरहातुरां रघुपतेस्साध्वीमनुध्यायतः क्रोधाग्निर्हृदि रावणं प्रति महानुज्ज्वालजालोऽज्ज्वलत् ॥ ७७ ॥**

पद्यानीति ॥ रिपोः शत्रोः रावणस्य उक्तिमयान्यपि वचन-प्रचुराण्यपि । प्राचुर्ये मयट् । प्रत्युक्तियोगात् सीताप्रतिवचनसम्ब-न्धात् अतिस्वादूनि अतीव स्वाद्यानि तानि पूर्वोक्तानि पद्यानि आदरतः आदरेण । सार्वविभक्तिकस्तसिः । अनिलात्मजमुखात् श्रुत्वा संतुष्यतोपि चमत्कारग्रहणेन परितुष्यतोपि विरहातुरां सा-ध्वीं पतिव्रतां तां देवीं सीतां अनुध्यायतः चिन्तयतः रघुपतेः हृदि रावणं प्रति महान् क्रोधाग्निः उद्गतं ज्वालजालं ज्वालाप-टलं यस्य तथोक्तस्सन् अज्वलत् अदीप्यत । 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरः । शार्दूलविक्रीडितं वृत्तम् ॥ ७७ ॥

**अथाभिप्रायज्ञद्युमणितनयाज्ञाक्षरविनिर्गमादेवाशाभ्यस्त्वरिततरमेत्यान्तिकजुषा ॥ कपीनां वाहि-**

**न्या सह रघुपतिस्सानुजसुहृज्जिघांसुः पौलस्त्यं निरगमदहिं वासव इव ॥ ७८ ॥**

अथेति ॥ अथ क्रोधोज्ज्वलनानन्तरं रघुपतिः अभिप्रायं रावणवधायैव निर्गन्तव्यमित्याकारकं स्वाशयं जानातीति तथोक्तस्य द्युमणितनयस्य सुग्रीवस्य आज्ञाक्षराणां सर्वैरपि वानरैरिदानीमेव राक्षसवधाय लङ्कां प्रति प्रस्थातव्यमित्याकारकाणां विनिर्गमादेव मुखतो निस्सरणादेव । न तु बलात्कारपूर्वकाच्चोदनादित्यर्थः । आशाभ्यः दिग्भ्यः त्वरिततरं यथातथा एत्य आगत्य अन्तिकं समीपं जुषते सेवत इति तथोक्तया । कपीनां वाहिन्या सेनया सह अनुजेन लक्ष्मणेन सुहृदा सुग्रीवेण च सह वर्तत इति तथोक्तस्सन् अहिं वृत्रासुरं—'सर्पे वृत्रासुरेऽप्यहिः' इति विश्वः । वासवः इन्द्र इव पौलस्त्यं रावणं जिघांसुः हन्तुमिच्छुस्सन् निरगमत् निरगात् ॥ ७८ ॥

**अहमहमहमेवायोधने रावणं तं नखरशिखरघातैर्दृष्टमात्रं छिनद्मि ॥ इति पथि पृथगुच्चैर्वीरवादं कपीनां स हृदि समभिनन्दन् राघवस्सस्मितोऽभूत् ॥ ७९ ॥**

अहमिति ॥ अहमहमहमेव आयोधने युद्धे दृष्टमात्रं तं रावणं नखरशिखरघातैः नखशिखाप्रहारैः छिनद्मि छेत्स्यामीत्यर्थः । इति

पथि मार्गे कपीनां पृथक् प्रत्येकं उच्चैः तारं वीरवादं हृदि समभिनन्दन् सम्यक् श्लाघमानः स राघवः सस्मितः समन्दहासः अभूत् । मालिनीवृत्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ७९ ॥

**महताऽथ विस्मयकरेण सेतुना रचितेन वानरवरैर्निजाज्ञया । समतीत्य दाशरथिरर्णवं रिपोरुपपत्तनं शिखरिणं कमप्यगात् ॥ ८० ॥**

महतेति ॥ अथ दाशरथिः निजाज्ञया वानरवरैः रचितेन महता विस्मयकरेण आश्चर्यजनकेन सेतुना अर्णवं समतीत्य रिपोः शत्रोः रावणस्येत्यर्थः । उपपत्तनं पत्तनस्य समीपे 'अव्ययं विभक्ति' इत्यादिना समीपार्थेऽव्ययीभावः । कमपि शिखरिणं पर्वतं सुवेलाचलमित्यर्थः । अगात् प्रापत् । मञ्जुभाषिणीवृत्तम्—'सजसा जगौ भवति मञ्जुभाषिणी' इति लक्षणात् ॥ ८० ॥

**तमारुह्योत्तुङ्गं जनकतनयाजानिरचलं वृतस्सुग्रीवाद्यैः पवनजनुषि प्रश्रयजुषि । प्रदेशिन्या संदर्शयति धुरि पौलस्त्यनगरं स्फुटाकृत्यद्राक्षीद्बदरमिव हस्तोदरगतम् ॥ ८१ ॥**

तमिति ॥ जनकतनया जाया यस्य स जनकतनयाजानिः श्रीरामः । जायाया निङ् । सुग्रीवः आद्यो येषां तैः वृतः परिवृ-

तस्सन् उत्तुङ्गं तमचलं सुवेलं आरुह्य प्रश्रयं विनयं जुषते सेवत इति तथोक्ते पवनजनुषि हनुमति धुरि अग्रे प्रदेशिन्या तर्जन्या— 'तर्जनी स्यात्प्रदेशिनी' इत्यमरः । संदर्शयति प्रदर्शयति सति पौलस्त्यनगरं लङ्कापुरं हस्तोदरगतं कराभ्यन्तरं प्राप्तं बदरं बदरीफलमिव स्फुटा आकृतिः यस्मिन्कर्मणि तद्यथा भवति तथा अद्राक्षीत् । शिखरिणीवृत्तम् ॥ ८१ ॥

**तद्दर्शनादेव रघूत्तमस्य कृतास्पदेऽक्ष्णोररुणिम्नि किंचित् ॥ हुमित्यदादर्कसुतः कपीनामरातिपुर्याक्रमणेऽभ्यनुज्ञाम् ॥ ८२ ॥**

तदिति ॥ तस्य लङ्कापुरस्य दर्शनात् वीक्षणादेव रघूत्तमस्य अक्ष्णोः नेत्रयोः अरुणिम्नि आरुण्ये किंचित् कृतं आस्पदं स्थानं येन तथोक्ते सति रामे ईषत्क्रुद्धे सतीत्यर्थः । अर्कसुतः सुग्रीवः कपीनां अरातिपुर्याः लङ्कायाः आक्रमणे अवस्कन्दने विषये हुमिति अभ्यनुज्ञामदात् अभ्यनुज्ञार्थं हुङ्कारमकार्षीदित्यर्थः । वृत्तमुपजातिः ॥

**क्षणे तस्मिन्नेव प्लवगततिरन्यादृशनिजप्रतापाविष्कारोचितसमयसम्प्राप्तिमुदिता ॥ तथाऽऽक्रम्यामृद्नाद्दशमुखपुरीं तत्र वसतां यथा हाहारावा बत मुखरयेयुर्दश दिशः ॥ ८३ ॥**

क्षण इति ॥ तस्मिन्नेव क्षणे सुग्रीवस्य हुङ्कारप्रवृत्तिसमय एवेत्यर्थः । अन्यादृशस्य असाधारणस्य निजस्य प्रतापस्य आवि-

ष्कारे अभिव्यञ्जने विषये उचितस्य समयस्य सम्प्राप्त्या उपगमेन मुदिता हृष्टा प्लवगततिः दशमुखपुरीं आक्रम्य तथा अभूद्यात् तत्र वसतां पौराणां हाहाकाराः दश दशापीत्यर्थः । दिशः यथा मुखरयेयुः शब्दायमानाः कुर्युः तथा अभूदिति पूर्वेण सम्बन्धः । बतेत्याश्चर्ये । शिखरिणीवृत्तम् ॥ ८३ ॥

**तच्छ्रुत्वा ज्वलितक्रुधो दशमुखस्यादेशतोऽत्योजसस्सिंहाः पर्वतकन्दरादिव पुरान्निर्गत्य रक्षोभटाः । युद्ध्वा वानरयूथपै रघुपतेस्स्वानुग्रहोद्गारदृग्धारोत्तेजितपौरुषैर्जहुरसून्क्रीडद्भिरेवार्दिताः ॥ ८४**

तदिति ॥ तत् वानरकृतं स्वपुरमर्दनं श्रुत्वा ज्वलितक्रुधः दीप्तकोपस्य दशमुखस्य आदेशतः आज्ञया । सार्वविभक्तिकस्तसिः । अतिशयितं ओजो येषां तथोक्ताः रक्षोभटाः पर्वतकन्दरात् सिंहा इव पुरात् निर्गत्य युद्ध्वा रघुपतेः अनुग्रहस्य उद्गारेण अभिव्यक्त्या सह वर्तत इति तथोक्तया दृग्धारया दृष्टिधोरण्या उत्तेजितं उपचितं पौरुषं येषां तथोक्तैः अत एव क्रीडद्भिरेव वानरयूथपैः अर्दिताः निष्पिष्टास्सन्तः असून् प्राणान् जहुः तत्यजुः ॥

**सचिवेषु सूनुषु सहोदरेष्वपि प्रहितेष्वथ प्रमथितेषु सङ्गरे ॥ अपि कुम्भकर्णमनुजं दशाननः प्रजिघाय सुप्तमवबोध्य यत्नतः ॥ ८५ ॥**

सचिवेष्विति ॥ अथ दशाननः प्रहितेषु योद्धुं प्रेषितेषु सचिवेषु प्रहस्तवज्रदंष्ट्रादिषु मन्त्रिषु सूनुषु देवान्तकनरान्तकादिषु पुत्रेषु सहोदरेष्वपि महोदरमहापार्श्वादिषु भ्रातृषु च सङ्गरे प्रमथितेषु नीलादिभिर्वानरवीरैर्निहतेषु सत्सु सुप्तं निद्राणं अनुजं कुम्भकर्णमपि यत्नतः प्रयत्नेन अवबोध्य प्रबोध्य प्रजिघाय योद्धुं प्रेषयामास । प्रपूर्वात् हिनोतेः कर्तरि लिट् । मञ्जुभाषिणीवृत्तम् ॥

**तस्मिन्नप्यवगिलिताखिलप्लवङ्गे ध्वान्तत्वं गतवति रामबाणभानोः । शूरस्सोऽप्यजनि नियुद्ध्य मेघनादस्सौमित्रिज्वलदिषुबर्हिषः पतङ्गः ॥ ८६ ॥**

तस्मिन्निति ॥ अवगिलिताः भक्षिताः अखिलाः प्लवङ्गाः येन तथोक्ते तस्मिन्नपि कुम्भकर्णे च रामस्य बाण एव भानुः तस्य ध्वान्तत्वं अन्धकारतां गतवति सति रामेण बाणेन हते सतीत्यर्थः । शूरः स प्रसिद्धः मेघनादोपि इन्द्रजिच्च नियुद्ध्य युद्ध्वा सौमित्रेः लक्ष्मणस्य सम्बन्धी ज्वलन् य इषुर्बाणः स एव बर्हिरग्निः—'बर्हिश्शुष्मा कृष्णवर्त्मा' इत्यमरः । तस्य पतङ्गः शलभः अजनि लक्ष्मणेन हतोऽभूदित्यर्थः । प्रहर्षणीवृत्तम्—'म्नौज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्' इति लक्षणात् ॥ ८६ ॥

**तथा समरदुर्मदं तमपि कुम्भकर्णं तथा सुराधिपतिजित्वरं तमपि मेघनादं हतम् । निशम्य दश-**

**कन्धरश्चिरतरं प्ररुद्य क्रुधा ज्वलन्नरिजिघांसया नि· रगमद्दुरीक्षः पुरात् ॥ ८७ ॥**

तथेति ॥ तथा अनितरसाधारणेन प्रकारेणेत्यर्थः । समरे दुर्मद दुर्दमगर्वं तं कुम्भकर्णमपि तथा सुराधिपतेरिन्द्रस्य जित्वरं जेतार तं मेघनादमपि हतं निशम्य रामलक्ष्मणाभ्यां संहृतौ श्रुत्वा दश कन्धरः चिरतरं प्ररुद्य रुदित्वा क्रुधा ज्वलन् अत एव दुरीक्ष दुर्दर्शस्सन् अरिजिघांसया पुरात् निरगमत् ॥ पृथ्वीवृत्तम्— 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात् ।

**रक्षोनाथस्य विक्षोभितमतिनिशितैस्सायकैर्वा नराणां सैन्यं संप्राप्तदैन्यं दिशिदिशि भयतो धाव दालोक्य रामः । आचक्षाणेन तेषामभयमिव दिश पूरयन्नुद्भटेन ज्याघोषेणाभ्यधावद्दशवदनमिभं के सरीवोग्ररंहाः ॥ ८८ ॥**

रक्षोनाथस्येति ॥ रामः रक्षोनाथस्य रावणस्य सम्बन्धिभिः अति निशितैः सायकैः विक्षोभितं व्याकुलीकृतं अत एव भयतः दि शिदिशि संप्राप्तदैन्यं यथातथा धावत् वानराणां सैन्यं आलोक तेषां वानराणामभयं मा भैष्टेत्यभयवचनं आचक्षाणेन ब्रुवाणेन स्थितेन उद्भटेन अत्यूर्जितेन ज्याघोषेण मौर्वीझङ्कारेण दिशः पूर यन् सन् इभं केसरी सिंह इव उग्रं रंहो वेगो यस्य तथो क्तस्सन् दशवदनं रावणं अभ्यधावत् ॥ स्रग्धरावृत्तम् ॥ ८८ ॥

**ततोऽभिमुखतां गते दशमुखे रघूणां पतिः ववर्ष विशिखावळीर्घन इवाम्बुधारा गिरौ ॥ स ता अपि सहन् कथञ्चन मुमोच यानाशुगान् स तानपि तिलांशशश्शकलयाम्बभूव प्रभुः ॥ ८९ ॥**

तत इति ॥ ततः रघूणां पतिः अभिमुखतां गते दशमुखे घनो मेघः गिरौ पर्वते अम्बुधारा इव विशिखावळीः बाणपङ्क्तीः ववर्ष । बाणधाराणामसङ्ख्याकत्वाविच्छिन्नपातत्वद्योतनायेयमुपमा । ता अपि रामबाणधारा अपि कथञ्चन सहन् । विकल्पतश्चौरादिकात्सहश्शतृप्रत्ययः 'स एवायं नागस्सहति कलभेभ्यः परिभवम्' इति प्रयोगश्च । स रावणः यान् आशुगान् बाणान् मुमोच तानपि प्रभुस्सर्वसमर्थः सः रघूणां पतिः तिलांशशः तिलशकलरूपेण शकलयाम्बभूव खण्डयामास । पृथ्वीवृत्तम् ॥ ८९ ॥

**साक्षाच्छृण्वति शिंशुपाशिखरमध्यास्याञ्जनेये पुरा यच्छौर्यं जनकात्मजां प्रति मुहू रक्षोधमाकत्थथाः ॥ क्वेदं दर्शयदर्शयेति वदतस्संलक्षतश्चाशुगै रामस्योक्तिमरुंतुदां दशमुखोऽसोढ्वा पराचक्रमे ॥ ९० ॥**

साक्षादिति ॥ रे! रक्षोधम! पुरा आञ्जनेये शिंशुपाशिखरमध्यास्य शिंशुपावृक्षाग्रे उपविश्येत्यर्थः । 'अधिशीङ्स्थासां कर्म'

इत्याधारस्य कर्मत्वम् । साक्षात् प्रत्यक्षं यथातथा शृण्वति सति जनकात्मजां प्रति मुहुः यत् शौर्यं अकत्थथाः अश्लाघथाः इदं शौर्यं क? कुत्र? अस्तीति शेषः । दर्शयदर्शय इति वदतः ब्रुवाणस्य आशुगैः संतक्षतश्च बाणैस्सन्तक्षणेन दुस्सहं स्वशौर्यमेव दर्शयतश्चेत्यर्थः । रामस्य सम्बन्धिनीं अरुंतुदां मर्मोद्घाटनेन व्यथयन्तीमित्यर्थः । 'अरुंतुदं तु मर्मस्पृक्' इत्यमरः । उक्तिं असोढ्वा दशमुखः पराक्रमे ईर्ष्यावशादुदितं पराक्रमं दर्शयितुमारेभ इत्यर्थः 'उपपराभ्याम्' इत्यात्मनेपदम् ॥ ९० ॥

**अन्योन्यास्त्रहतित्रुटत्कवचफाङ्काङ्कारसाडम्बरा चापोद्यच्छरतर्क्यतद्ग्रहणसंधानप्रयोगक्रिया । अश्रद्धेयजयाजयाऽतिभयदाऽप्याजिस्तयोर्द्योसदामुच्छिन्नोत्पतदाशराधिपमुखालोकादभूत्तुष्टये ॥ ९१ ॥**

अन्योन्येति ॥ अन्योन्यास्त्रहत्या परस्परशस्त्रप्रहारेण त्रुटतां छिद्यमानानां कवचानां परस्परतनुत्राणां सम्बन्धिना फाङ्काङ्कारेण फाङ्काडितिध्वनिना साडम्बरा सतूर्यनिनदा तूर्यनिनदायितफाङ्काङ्कारेत्यर्थः । 'आडम्बरस्तूर्यरवः' इत्यमरः । चापाभ्यां उद्यद्भिः उत्पतद्भिः शरैः बाणैः चापाभ्यां बाणानां उत्पतनरूपेण लिङ्गेनेत्यर्थः । तर्क्याः अनुमेयाः तेषां शराणां ग्रहणसंधानप्रयोगक्रियाः तूणीमुखोद्धरणमौर्वीसंयोजनलक्ष्याभिपातनरूपव्यापाराः यस्यां तथोक्ता । उभयोरप्यतिक्षिप्रहस्तत्वादिति भावः । अश्रद्धेयौ निर्ण-

याविषयौ जयाजयौ जयपराजयौ यस्यां तथोक्ता अत एव अति-
भयदाऽपि तयोः रामरावणयोः आजिः युद्धं उच्छिन्नानां राम-
बाणैरुच्छूनानां उत्पतां च आशाराधिपमुखानां रावणशिरसां आलो-
कात् दर्शनाद्धेतोः द्योसदां देवानां तुष्टये अभूत् ॥ ९१ ॥

**शस्त्रेऽस्त्रेऽतिमहत्सु बाहुषु महामायाविधानेऽपि**
**यत्प्राचण्डयं बत सर्वदिक्पतिजये रक्षःपतेस्साध-**
**नम्। तद्वीरस्य रघूत्तमस्य पुरतोऽकिञ्चित्करं सर्वम-**
**प्यग्रेऽग्नेरिव शालभं विलसितं जज्ञेऽपहासास्पदम्॥**

शस्त्र इति ॥ शस्त्रे खड्गाद्यायुधप्रयोगे इत्यर्थः । एवमग्रेऽपि
लक्षणया । अस्त्रे आग्नेयाद्यस्त्रप्रयोगे अतिमहत्सु बाहुषु महा-
भुजबलसाध्ये कर्मणि । महत्याः मायाया विधानेऽपि आविर्भा-
वने च । सर्वत्र विषयसप्तमी । रक्षःपतेः रावणस्य यत् प्राचण्ड्यं
प्रचण्डत्वं अतिपटुत्वमिति यावत् । सर्वेषां दिक्पतीनां इन्द्रादीनाम् ।
कर्मणि षष्ठी । जये साधनं अभूदिति शेषः । बतेत्याश्चर्ये ।
सर्वमपि तत्प्राचण्ड्यं वीरस्य रघूत्तमस्य पुरतः अकिञ्चित्करं
अतितरामप्रयोजकं सदित्यर्थः । अग्नेः दीपात्मकस्येति भावः । अग्रे
शालभं शलभसम्बन्धि विलसितं क्रीडितमिव अपहासास्पदं द्रष्टॄणां
अपहासविषयीभूतं जज्ञे बभूव ॥ ९२ ॥

**छेदो निष्पुनरुद्भवोऽयमयमित्येव प्रतिच्छेदमु-**
**च्छिन्नेष्वप्यसकृच्छिरस्सु पुनरुत्पन्नेषु रक्षःपतेः।**

**एवं दुर्दम एष केन सुदमः पापीति धीः क्रोधमु-
द्बोध्याजिग्रहदस्त्रमाम्बुजभवं द्राग्जानकीजानिना॥**

छेद इति ॥ प्रतिच्छेदं छेदेछेदे । वीप्सायामव्ययीभावः । अयं छेदो निष्पुनरुद्भवोऽयं छेदो निष्पुनरुद्भवः इत्येव । इदानीं छिन्नान्यस्य शिरांसि न पुनरुत्पत्स्यन्त इदानीं छिन्नान्यस्य शिरांसि न पुनरुत्पत्स्यन्त इति निश्चित्यैवेत्यर्थः । असकृत् उच्छिन्नेष्वपि बाणैर्लूनेष्वपि रक्षःपतेः शिरस्सु पुनः भूयोपि उत्पन्नेषु अङ्कुरितेषु सत्सु एवं दुर्दमः अनया रीत्या शिरांस्येव समूलमसकृदुच्छिन्दताऽपि मया प्राणैर्वियोजयितुमशक्यः । एष पापी रावणः केन सुदमः? केन पुनरन्येन वीरेण हन्तुं शक्यः? इति धीः पर्यालोचनात्मिका बुद्धिः प्रयोजिका कर्त्री क्रोधमुद्बोध्य चिरयुद्धकेल्यनुबुभूषया रामस्य हृदि विलम्बितामपि जिघांसां क्षिप्रमुत्पाद्येत्यर्थः । जानकीजानिना रामेण प्रयोज्येन द्राक् क्षिप्रं आम्बुजभवं ब्राह्मं अस्त्रं अजिग्रहत् ग्राहयति स्म ग्राहयतेर्लुङ् ॥

**अलब्धव्याघातं क्वचिदपि तदस्त्रं रघुपतौ
प्रयुञ्जानेऽत्युग्रं कुलिशमिव वेगान्मघवति ॥ तदा-
घातादुच्चैर्गिरिरिव स रक्षःपरिबृढः पपातोर्व्यां सा-
न्द्रैस्सह कुसुमवर्षैर्दिविषदाम् ॥ १४ ॥**

अलब्धेति ॥ मघवति अत्युग्रं कुलिशं वज्रायुधमिव रघुपतौ क्वचिदपि कुत्रचिल्लक्ष्येऽपि अलब्धः व्याघातः प्रतिघातो येन

तथोक्तं तदस्त्रं ब्रह्मास्त्रं वेगात् प्रयुञ्जाने सति तदाघातात् तस्य ब्रह्मास्त्रस्य अभिघातात् । पर्वतपक्षे तस्य कुलिशस्य अभिघाता-दित्यर्थः । उच्चैर्गिरिरिव स रक्षःपरिबृढः रावणः दिविषदां देवानां सम्बन्धिभिः तत्कर्तृकैरित्यर्थः । सान्द्रैः कुसुमवर्षैस्सह उर्व्यां पपात ॥ ९४ ॥

**अथैत्य ब्रह्माद्या निजगदुरमर्त्या रघुपते त्रि-लोकी निर्बाधाऽजनि विरचिते रावणवधे ॥ सतीं सीतां नीत्वा विधिवदभिषिक्तोऽवनिमवन्नयोध्यायां राज्यश्रियमनुभवानन्दत इति ॥ ९५ ॥**

अथ रावणसंहारानन्तरं ब्रह्माद्याः अमर्त्याः देवाः एत्य आगत्य निजगदुः राममूचुः तत्प्रकारमेवाह—हे! रघुपते! राव-णवधे विरचिते सति त्रिलोकी निर्बाधा निरुपप्लवा अजनि अ-भूत् । सतीं पतिव्रतां सीतां नीत्वा अयोध्यामुपनीयेत्यर्थः । विधि-वत् अर्हार्थे वतिः । विध्यर्हं यथातथेत्यर्थः । अभिषिक्तस्सन् अव-निं भूमिं अवन् रक्षन् अयोध्यायां आनन्दतः आनन्देन राज्य-श्रियं अनुभव इति निजगदुरिति पूर्वेण सम्बन्धः । शिखरिणी-वृत्तम् ॥ ९९ ॥

**तथाऽस्त्विति कृतानतिः प्रमुदितानशेषान्सुरा-न्विसृज्य दशकन्धरानुजमशेषरक्षःपतिम् । विधाय**

**तदुपाहृतं सजनकात्मजस्सानुजो विमानवरमास्थितो रघुपतिः प्रतस्थे मुदा ॥ ९६ ॥**

तथेति ॥ रघुपतिः तथाऽस्त्विति उक्त्वेति शेषः । कृता आनतिः येन तथोक्तस्सन् प्रमुदितान् स्वस्य विनयेन प्रहृष्टान् अशेषान् सुरान् विसृज्य दशकन्धरानुजं विभीषणं अशेषरक्षःपतिं सकलराक्षसाधीश्वरं विधाय लङ्काराज्येऽभिषिच्येत्यर्थः । तदुपाहृतं तेन विभीषणेनोपायनीकृतं इत्यर्थः । विमानवरं पुष्पकं सजनकात्मजः सानुजः आस्थितस्सन् सीतालक्ष्मणाभ्यां सहारूढस्सन्नित्यर्थः । मुदा प्रतस्थे । अयोध्यामिति शेषः । पृथ्वीवृत्तम् ॥ ९६ ॥

**तदाऽतिप्रेम्णोद्यत्पुलकभरमङ्कं रघुपतिर्बलाल्लज्जाविष्टामपि समधिरोप्यावनिसुताम् । प्रफुल्लाभ्यामन्तःप्रणयरसमत्युत्कटमिव प्रवर्षन्नक्षिभ्यामिदमवददत्यन्तमुदितः ॥ ९७ ॥**

तदेति ॥ रघुपतिः लज्जाविष्टामपि उत्सङ्गमधिरोढुमपत्रपमाणामपीत्यर्थः । अवनिसुतां सीतां उद्यन् उत्पद्यमानः पुलकभरः । रोमाञ्चातिशयः यस्मिन् तं अङ्कं उत्सङ्गं अतिप्रेम्णा बलात् समधिरोप्य प्रफुल्लाभ्यां विकसिताभ्यां अक्षिभ्यां नेत्राभ्यां अत्युत्कटं अत्युद्रिक्तान्मनस्यमान्तमित्यर्थः । अन्तःप्रणयरसं प्रवर्षन्निवेत्युत्प्रेक्षा । अत्यन्तमुदितः अतीव प्रहृष्टस्सन् इदं वक्ष्यमाणं वचनं अवदत् । अतीव अनुरागतः पश्यन्नब्रवीदित्यर्थः । शिखरिणीवृत्तम् ॥ ९७ ॥

**दुर्दैवपरिपाकेन दुष्टराक्षसमायया ।**
**प्राप्तानुभूतं संक्लेशं सर्वं सुतनु विस्मर ॥ ९८ ॥**

दुर्दैवेति ॥ हे! सुतनु! दुर्दैवस्य परिपाकेन फलोन्मुखतया दुष्टानां राक्षसानां मायया हेतुना प्राप्तानुभूतं सर्वं संक्लेशं राक्षसोपरोधराक्षसीपरितर्जनादिरूपं विस्मर ॥ ९८ ॥

**प्रिये जनकजे निजं गुणमभिष्टुवन्नावणः पुरा यदुभयार्थकप्रतिगिरा निरस्तस्त्वया । तदस्मदभितुष्टयेऽजनि हनूमदुक्तं क्रमात्तथा प्रतिवचोऽद्भुतं वद कथं तव प्रत्यभात् ॥ ९९ ॥**

प्रिये इति ॥ प्रिये! जनकजे! हे! प्रेयसि! जानकि! पुरा अशोकवनवासावसरे निजं गुणं अभिष्टुवन् 'परिक्षीणालस्यस्समरभुवि' इत्यादिरूपेण आत्मश्लाघां कुर्वन्नित्यर्थः । रावणः त्वया उभयार्थकप्रतिगिरा 'रेऽधम मुहुरलं त्वां श्रुतवती' इत्यादिरूपेण श्लिष्टार्थेन प्रतिवचनेन निरस्तः निराकृत इति यत्—'प्रत्यादिष्टो निरस्तस्स्यात्प्रत्याख्यातो निराकृतः' इत्यमरः । क्रमात् हनूमदुक्तं आञ्जनेयेन कथितं तत् सर्वं अस्मदभितुष्टये अजनि। अस्माकं परितोषमकार्षीदित्यर्थः । तथा तेन प्रकारेण अद्भुतं अर्थान्तरप्रतिपादनानुकूलयाऽक्षरघटनयाऽऽश्चर्यकरमित्यर्थः । प्रतिवचः प्रतिवचनं तव कथं प्रत्यभात् प्रतिभाति स्म वद । पृथ्वीवृत्तम् ॥ ९९ ॥

**इत्यादरेण पृच्छन्तं प्रेमतः प्राणवल्लभम् । उ वाच देवी मन्दाक्षमन्दाक्षरमिदं वचः ॥ १०० ॥**

इतीति ॥ देवी सीता इति प्रेमतः आदरेण पृच्छन्तं प्राण वल्लभं रामं मन्दाक्षेण लज्जया मन्दानि अस्फुटानि अक्षराणि यस्मिन् तथोक्तं यथातथा इदं वक्ष्यमाणं वचः उवाच ॥१००

**देव त्वच्चरणारविन्दयुगळध्यानामृतास्वादनव्य सक्तामपि मां दुरुक्तिमसकृद्रक्षोऽधमे जल्पति । क्रो धस्यैव बलात्किमप्युदभवत्प्रत्युत्तरं मन्मुखाच्छ्लिष्ट र्थत्वचमत्क्रियाऽत्र तु तवैवानुग्रहान्नान्यथा ॥१०**

देवेति ॥ हे! देव! रक्षोऽधमे रावणे त्वच्चरणारविन्दयं युगळस्य ध्यानमेव अमृतं तस्य आस्वादने व्यासक्तामपि असकृत् दुरुक्तिं जल्पति सति क्रोधस्य बलादेव पतिव्रताज समुचितं परपुरुषानभिभाषणव्रतमपि प्रसभमुत्सारयतः कोपादित्यर्थ किमपि अर्थतोऽन्वयतश्चानाकलितरूपमित्यर्थः । प्रत्युत्तरं मन्मुख उदभवत् अत्र एवमुद्भूते प्रतिवचने श्लिष्टार्थत्वचमत्क्रिया उभयार्थप्रतिपादकत्वचमत्कृतिःपुनः स्वाविदितत्वद्योतनार्थकस्तुशब्द तव अनुग्रहादेव स्यादिति शेषः । अन्यथा न । स्याच्चेत्सा त्व नुग्रहमूलिकैव । न तु स्वविज्ञानमूलिकेत्यर्थः ॥ १०१ ॥

**इति सविनयं प्रेयस्योक्तः प्रहृष्य रघूत्तमो द्रुत मुपगतोऽयोध्यामुच्चैस्समूर्तिरिवोत्सवः । भरत**

**भिनन्द्यर्षिश्रेष्ठैर्वसिष्ठपुरोगमैः विधिवदभिषिक्तस्स-
न्राज्ये जुगोप चिरं महीम् ॥ १०२ ॥**

इतीति ॥ इति उक्तप्रकारेण प्रेयस्या सीतया सविनयं यथा-
तथा उक्तः अभिहितः रघूत्तमः रामः प्रहृष्य सन्तुष्य समूर्तिः
मूर्तिमान् उच्चैः महान् उत्सव इव द्रुतं अयोध्यां उपगतस्सन्
भरतं अभिनन्द्य उपलालनया परितोष्य वसिष्ठः पुरोगमो येषां
तैः ऋषिश्रेष्ठैः विधिवत् राज्ये अभिषिक्तस्सन् चिरं महीं जुगोप
ररक्ष । हरिणीवृत्तं—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी
तदा' इति लक्षणात् ॥ १०२ ॥

**इन्दुः कैरविणीरिवाम्बरमणिश्श्रीमानिवाम्भो-
जिनीर्वासन्तीर्लतिकावळीरिव जगत्कान्तो वस-
न्तोदयः ॥ उल्लासं सकलाः प्रजाः प्रतिकलं क-
ल्लोलितं लम्भयन् जानक्या सह राघवश्चिरतरं
राज्यश्रियं सोऽन्वभूत् ॥ १०३ ॥**

इन्दुरिति ॥ स राघवः कैरविणीः कुमुदिनीः इन्दुरिव अ-
म्भोजिनीः पद्मिनीः श्रीमान् अम्बरमणिः सूर्य इव—'द्युमणिस्त-
रणिर्मित्रः' इत्यमरः । वासन्तीः माधवीः लतिकावळीः लता-
पङ्क्तीः जगत्कान्तः लोकमनोहरः वसन्तोदय इव सकलाः प्रजाः
प्रतिकलं प्रतिक्षणं कल्लोलितं तरङ्गितं उल्लासं लम्भयन् प्रापयन्

सन् जानक्या सह चिरतरं अतिचिरं कालं राज्यश्रियं राज्य-लक्ष्मीं अन्वभूत् ॥ १०३ ॥

**अन्यूनैश्शतकात्कृतिस्स्वयमियं गूढार्थपद्यैर्युता**
**कर्तव्येति ससंविदप्यतिचिरश्रान्तो मतिक्षोभतः ।**
**विश्रान्तोऽस्म्यवशिष्टमर्धशतकं संग्रथ्य मत्संविदा**
**सार्धं यः परिपूरयेत्कृतिमिमां तस्मै सहस्रं नमः॥**

ग्रन्थमेवं परिसमाप्य ग्रन्थकृदिदानीमेतद्ग्रन्थविषयकं स्वोदन्त-माह—अन्यूनैरिति ॥ इयं कृतिः सीतारावणसंवादझरी स्वयं आत्मनैव शतकात् शतसंख्येभ्यः श्लोकेभ्य इत्यर्थः । अन्यूनैः अनवहीनैः गूढः अर्थः येषु तथोक्तानि च तानि पद्यानि च तैः युता युक्ता कर्तव्या इति ससंविदपि कृतप्रतिज्ञोपीत्यर्थः । मतिक्षोभतः बुद्धिक्लेशात् हेतोः अतिचिरश्रान्तः चिरतरकृतपरिश्रमः अहं विश्रान्तोऽस्मि पञ्चाशतैव तादृशैः पद्यैः कृतकृत्यंमन्यः कर्तव्यत्वेन प्रतिज्ञातेष्वप्यन्येषु श्लथोद्यमोऽस्मीत्यर्थः । यः कविः अवशिष्टं अर्धशतकं कर्तव्यत्वेन प्रतिज्ञातानि पञ्चाशतं पद्यानी-त्यर्थः । सङ्ग्रथ्य मत्संविदा सार्धमिमां कृतिं मम प्रतिज्ञां कृति-मिमां चोभयमपीत्यर्थः । परिपूरयेत् तस्मै सहस्रं नमः । महो-पकारिणं तं सहस्रशः प्रणमामीत्यर्थः । 'नमस्स्वस्ति' इत्यादिना चतुर्थी ॥ १०४ ॥

**भवित्री रम्भोर्वित्यनभिनवपद्यं यदिह तद्विधं पद्यं त्वेवासुकरमिति कस्यापि वचसा ॥ दशास्योक्त्यूङ्घ्रि क्षितिदुहितृवागन्त्यचरणस्फुटैकार्थं चोक्तं सुललितमिह श्लोकनवकम् ॥ १०५ ॥**

एवं गूढार्थगर्भितप्रत्युक्तिमतां श्लोकानामतिदौष्कर्यमुक्तिभङ्ग्या द्योतयित्वा सम्प्रति स्फुटार्थप्रत्युक्तिमतां श्लोकानां सुकरत्वं द्योतयन्नाह—भवित्रीति ॥ इह लोके भवित्री रम्भोर्विति उपक्रमनिर्देशोऽयम् । 'भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना स मे रामस्स्थाता न युधि पुरतो लक्ष्मणसखः । इयं यास्यत्युच्चैर्विपदमधुना वानरचमूर्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः" इत्याकारकमित्यर्थः । यत् अनभिनवपद्यं पुरातनश्लोकः अस्तीति शेषः । तस्य विधेव विधा यस्य तत्तथोक्तं पद्यं त्वेव असुकरं दुष्करं इति कस्यापि यस्य कस्यचिदित्यर्थः । वचसा वचनेनं हेतुना कस्यापीत्युक्तिस्तस्मिन्कवितातारतम्यानभिज्ञत्वोपरिप्लवबुद्धित्वनिश्चयेनात्यन्तमनादरं द्योतयति । दशास्यस्य रावणस्य उक्तयः उक्तिरूपाः त्रयः अङ्घ्रयः पादाः यस्मिन् तथोक्तं क्षितिदुहितुः सीतायाः वाक्षु वाग्रूपेष्वित्यर्थः । अन्त्यचरणेषु तुरीयपादेषु स्फुटः अगूढः एकः अश्लिष्टः अर्थः निर्दिष्टसङ्ख्याक्षरपरित्यागविधानरूपः यस्मिन् तथोक्तं सुललितं सुबोधार्थमित्यर्थः । श्लोकनवकं च इह ग्रन्थे ऊक्तम् । कर्मणि क्तः । शिखरिणीवृत्तम् ॥ १०५ ॥

**ग्रन्थं वीक्ष्य गुणागुणाववहिता निर्धार्य न्ति ये ये निन्दन्ति च तांश्च तांश्च शिरसा भव वन्दामहे । कर्तुस्साम्प्रतिकत्वमेव परमो कृतेरित्यमूमस्पृष्ट्वैव हुमित्यनादरकृतां नामापि ब्रूमहे ॥ १०६ ॥**

ग्रन्थमिति ॥ ये बुधा इति शेषः गुणैकदृश इति अवहिताः सावधानास्सन्तः ग्रन्थं वीक्ष्य गुणागुणौ गुणदोषौ धार्य तत्वतो निश्चित्य नन्दन्ति ये च बुधाः दोषैकदृशः भावः । निन्दन्ति तांश्च तांश्च गुणग्रहणेन नन्दतो दोषग्रहणेन निन्दतश्चोभयानपि भक्त्यैव न तु कुटिलभावेनेत्येवकारः शिरसा वन्दामहे नमस्कुर्मः किन्त्विति शेषः । कर्तुः कवेः साम्प्रतिकत्वमिदानीन्तनत्वमेव कृतेः काव्यस्य परमः निरतिशयः इति मत्वेति शेषः । गम्यमानत्वादप्रयोगः । अमूं कृतिं स्पृष्ट्वैव दूरत एव परिहृत्येत्यर्थः हुमिति अत्यन्तावज्ञाप्रयुक्तेन तद्धुङ्कारेणेत्यर्थः । अनादरं परिभवं कुर्वन्तीति तथोक्तानां यान्धानामिति भावः । नामापि न ब्रूमहे न वदामः । तेः त्यन्तं जुगुप्सामह इत्यर्थः ॥ १०६ ॥

**शृङ्गेरिपुरशारदाङ्घ्रिकमलद्वन्द्वं बहून्वत्सरान्न वित्वा तदनुग्रहेण परमं वैदुष्यमासेदुषः । श्री**

**ङ्कटशब्दपूर्वरमणाभिख्यस्य विद्वन्मणेस्सूनोर्वागिह चामराजनगरीरामस्य जीयादियम् ॥ १०७ ॥**

शृङ्गेरीति ॥ शृङ्गेरीपुरे कर्नाटमण्डल्यां तुङ्गभद्रातीरस्थतया प्रसिद्धे या शारदा श्रीमच्छङ्करभगवत्पादाचार्यप्रतिष्ठापिततया जगत्प्रसिद्धेति भावः । तस्याः अङ्घ्री कमले इवेत्युपमितसमासः । तयोः द्वन्द्वं बहून्वत्सरान् बहुषु वत्सरेष्वित्यर्थः । अत्यन्तसंयोगे द्वितीया । सेवित्वा तस्याश्शारदायाः अनुग्रहेण परमं निरतिशयं वैदुष्यं विद्वत्तां आसेदुषः प्राप्तवतः श्रीमान् पापापनोदनशक्तिसम्पत्तिमान्—'शोभासम्पत्तिपद्मासु लक्ष्मीश्श्रीरपि कथ्यते' इत्यजयः । वेङ्कटशब्दः पूर्वः पूर्वसमीपवर्ती यस्य स तादृशो यः रमणः रमणशब्दः स एव अभिख्या नाम यस्य तथोक्तस्य वेङ्कटरमणाभिख्यस्येत्यर्थः—'अभिख्या नामशोभयोः' इति विश्वः । विद्वान् मणिरिव तस्य विद्वद्वर्यस्येत्यर्थः । सूनोः पुत्रस्य कनीयस इति भावः ॥ ज्यायसस्तु—धातुकारिकाधातुरूपप्रकाशिकाद्युद्ग्रन्थरचनतश्श्रुततमेन चामराजनगरश्रीकण्ठसुधीनाम्ना प्रथमानत्वात् । चामराजनगरीरामस्य चामराजनगररामनाम्ना व्यवह्रियमाणस्येत्यर्थः । कवेरिति शेषः । वाक् उक्तिः तेनोक्तेत्यर्थः । इयं सीतारावणसंवादझरी जीयात् सर्वोत्कर्षेण वर्तिषीष्ट । आशिषि लिङ् ॥ १०७ ॥

**तर्कव्याकरणादिषु क्वचिदपि प्रज्ञाविशेषाद्यशो नैवाप्नोद्विदुषां वरस्य जगति ख्यातस्य पुत्रोपि यः।**

**व्यर्थं हन्त स चामराजनगरीरामोऽजनिष्टाथवा
सीतारावणवादझर्यवतरेत्कस्मादतस्माद्भुवि ॥१०८**

तर्केति ॥ यः चामराजनगरीराम इत्यर्थः । जगति ख्यातस्य पूर्वोक्तस्य चामराजनगरवेङ्कटरमणान्तर्वाणिनाम्ना प्रथितस्य विदुषां वरस्य पुत्रोपि तर्कव्याकरणादिषु शास्त्रेष्विति शेषः । क्वचिदपि कुत्रचिच्छास्त्रेऽपि विषये प्रज्ञाविशेषात् ज्ञानातिशयात् यशः कीर्तिं नैवाप्नोत् नालभतैव स चामराजनगरीरामः व्यर्थं निष्प्रयोजनं यथा तथा अजनिष्ट उदभूत् । हन्तेति खेदे । अथवा तस्मिन्नजाते सतीत्यर्थः । सीतारावणवादझरी पूर्वोक्ता अतस्मात् तदन्यस्मात् कस्मात्कवेः अपादानात् भुवि अवतरेत् प्रवर्तेत न कस्मादपीत्यर्थः । अत एव सफलं तस्य जन्मेति सर्वमनवद्यम् ॥ १०८ ॥

अव्याजादतिवत्सला मयि ममाख्यास्यानन्तं या स्वयं
सीतारावणवादझर्यभिधया ख्यातां कृतिं दुर्घटाम् ।
सङ्ख्यातिमुदा तदर्थविवृतिं चैवं व्यधात्तुष्टये
सीताराघवयोर्नमामि शिरसा वाग्देवतामेव ताम् ॥

श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः



# अशुद्धसंशोधनं पाठान्तरं च.



| पुटे. | पङ्क्तौ. | अशुद्धं. | शुद्धं. |
|---|---|---|---|
| 3 | 4 | टिलोपो नः | टिलोपो न |
| 6 | 18 | निवश्योद्याने | निवेश्योद्याने |
| 11 | 17 | निशयमन् | निशमयन् |
| 18 | 6 | प्रणमस्त्रलिभ्य | प्रणम्रस्त्रीलभ्य |
| 20 | 18 | षद्यं | पद्यं |
| 27 | 7 | प्यावत्ति | प्यावृत्ति |
| 28 | 2 | लेच्- | चेल- |
| ,, | 11 | भृतयने | भृतनये |
| 37 | 17 | [illegible]त्यनुकम्पया | मिति याऽनुकम्पा तया |
| 51 | 1 | दुरात्मा | दुरात्मा |
| 67 | 6 | प्रत्यह | प्रत्याह |
| 73 | 3 | परि[illegible]मेद्रो | परिणमेद्रा' |
| 76 | 11 | इत्याश्चर्ये | इति परिहासे |
| 86 | 8 | रावणसीतामाह | रावणस्सीतामाह |
| 103 | 14 | विधृतं | विधुतं |
| 111 | 2 | अभिमतः | अभीष्टः |
| 120 | 15 | युध्युद्व | युध्युद्राव |
| 1_2 | 18 | वत्रूश्रीजयजत | वक्रश्रीजयजात |
| 128 | 4 | अमृद्रादिति | अमृद्रादिति |
| ,, | 6 | तच्छृत्वा | तच्छ्रुत्वा |
| 132 | 16 | स्तूर्यरवः | स्तूर्यरवे |
| 137 | 2 | विस्मत | विस्मर |
| ,, | 19 | पृथ्वी | पृथ्वी |